**प्रोवाच शक्रं देवेशं तदातिथ्यार्थमुत्थितम्।**
**त्रैलोक्यनाथ भगवन् क एते सूर्यवर्चसः।।४८।।**
**हरयो वाऽनन्तरूपधरा बुधगणेश्वर।**
**कुतः समागता ह्येते द्यां प्रयान्ति च सेविताः।।४९।।**

इन्द्र उवाच

**प्रिये ह्येते महात्मानो मायाक्षेत्रान्तवासिनः।**
**मृता गच्छन्ति परमास्तद्विष्णोः परमं पदम्।।५०।।**
**मायाक्षेत्रसमं पुण्यं पृथिव्यां नैव विद्यते।**
**तिस्त्रः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत्।।५१।।**
**तानि तीर्थानि तन्वङ्गि मायाक्षेत्रे न संशयः।**
**वयं सर्वेऽपि तत्रैव वसामो भक्तिलालसाः।।५२।।**

रम्भोवाच

**अहमत्र वसेयं वै यथाऽऽज्ञापय वासव।**
**भविष्यामि यथा ह्यन्ते कृपां कुरु मयि प्रभो।।५३।।**

---

उन लोगों के अतिथि सत्कार करने के लिए उठे हुए देवाधिपति इन्द्र से रम्भा ने पूछा—हे त्रिलोकीनाथ, भगवन्! सूर्य के समान तेजस्वी ये लोग कौन हैं?।।४८।।

हे बुधगणेश्वर! क्या भगवान् हरि ने अनन्त रूप धारण किये हैं? ये कहाँ से आ रहे हैं, जो देवताओं से सेवित होते हुए स्वर्गलोक को जा रहे हैं।।४९।।

**इन्द्र ने कहा**

हे प्रिये! ये हरिद्वार में निवास करने वाले महात्मा लोग हैं। अब ये लोग मृत्यु को प्राप्त होकर भगवान् विष्णु के परम पद की यात्रा कर रहे हैं।।५०।।

मायाक्षेत्र (हरिद्वार) के समान पृथिवी पर अन्य कोई पवित्र क्षेत्र नहीं है। वायु ने बताया है कि यहाँ पर साढ़े तीन करोड़ तीर्थ हैं।।५१।।

हे तन्वङ्गि! वे सभी तीर्थ मायाक्षेत्र में निवास करते हैं। इसलिए हम लोग भी भक्ति की अभिलाषा से उसी क्षेत्र में निवास करते हैं।।५२।।

**रम्भा ने कहा**

हे इन्द्र! आप ऐसी आज्ञा दीजिए, जिससे मैं भी वहीं पर निवास कर सकूँ। हे प्रभो! मैं अन्त समय में ऐसा कर सकूँ, मुझ पर ऐसी कृपा कीजिए।।५३।।

इन्द्र उवाच

सरिद्भूता वरारोहे नित्यं तिष्ठ वरानने।
पुण्ये तव जले येऽपि स्नातारः पारगामिनः॥५४॥

स्कन्द उवाच

इति श्रुत्वा वचो भर्तुः प्रणिपत्य त्वरान्विता।
आययौ परमे पुण्ये मायाक्षेत्रे सरिद्वरा॥५५॥
जाता पुण्यतमा विप्र सर्वपापप्रणाशिनी।
रम्भाकुण्डं च गङ्गायां सङ्गमे पुण्यदायके॥५६॥
उपस्पृश्यापि पानीयं रम्भया सह मोदते।
रम्भेश्वरो महादेवस्तत्रैव शिवदायकः॥५७॥

## कुब्जाम्रकतीर्थस्य माहात्म्यम्

ततः परं महाभाग कुब्जाम्रकमिति श्रुतम्।
यत्राम्रे कुब्जरूपेण दृष्टो मुनिभिरच्युतः॥५८॥

---

**इन्द्र ने कहा**

हे वरानने! सुन्दरि! तुम नदी बनकर वहाँ नित्य निवास करो। तुम्हारे पवित्र जल में जो लोग स्नान करेंगे, वे लोग भी मोक्ष को प्राप्त करेंगे।।५४।।

**स्कन्द ने कहा**

स्वामी के इस प्रकार के वचन को सुनकर उस क्षेत्र में आने के लिए उतावली रम्भा परम पवित्र मायाक्षेत्र में श्रेष्ठ नदी बनकर आ गयी।।५५।।

हे विप्र! वह समस्त पापों का नाश करने वाली अत्यन्त पवित्र हो गयी। जिस स्थान पर गङ्गा में पुण्यदायक सङ्गम हुआ है, वहाँ रम्भाकुण्ड है।।५६।।

जो व्यक्ति उसके जल का स्पर्शमात्र भी करता है, वह रम्भा अप्सरा के साथ आनन्द को प्राप्त करता है। उसी स्थान में रम्भेश्वर महादेव हैं, जो कल्याण प्रदान करने वाले हैं।।५७।।

### कुब्जाम्रक तीर्थ का माहात्म्य

हे महाभाग! उसी के आगे कुब्जाम्रक नामक तीर्थ प्रसिद्ध है। जहाँ आम्र वृक्ष के नीचे मुनियों ने कुब्ज (कुबड़े) के रूप में भगवान् विष्णु को देखा था।।५८।।

ततः कुब्जाम्रकं तीर्थं सर्वपापप्रणाशनम्।
सकृद् दृष्ट्वा तु यत्क्षेत्रं परब्रह्मणि लीयते॥५९॥
इति ते कथितं विप्र गङ्गाद्वारस्य वैभवम्।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः॥६०॥
श्राद्धे शृणोति यो मर्त्यो गङ्गाद्वारस्य वैभवम्।
पितरस्तस्य गच्छन्ति तद्विष्णोः परमं पदम्॥६१॥
यः पठेन्मानवो भक्त्या शृणुयाद्वापि भक्तितः।
स याति परमं स्थानं यत्र देवो महेश्वरः॥६२॥

॥ इति श्रीस्कान्दे केदारखण्डे मायाक्षेत्रमाहात्म्ये गङ्गाद्वारमाहात्म्यवर्णनं नाम पञ्चदशाधिकशततमोऽध्यायः॥११५॥

---

उसी समय से वह तीर्थ कुब्जाम्रक नाम से विख्यात हुआ है, जो सभी पापों को विनष्ट करने वाला है। इस क्षेत्र का एक बार भी दर्शन कर लेने से मनुष्य परब्रह्म में लीन हो जाता है॥५९॥

हे विप्र! इस प्रकार हमने गङ्गाद्वार (हरिद्वार) क्षेत्र का माहात्म्य तुम्हारे प्रति वर्णन किया है, जिसका श्रवण करने से भी मनुष्य सभी पापों से मुक्त हो जाता है, इसमें कोई सन्देह नहीं है॥६०॥

जो मनुष्य श्राद्ध के अवसर पर हरिद्वार क्षेत्र के माहात्म्य को सुनता है, उसके पितर विष्णु के परम पद को प्राप्त कर लेते हैं॥६१॥

जो मनुष्य भक्तिपूर्वक इसका पाठ करता है, अथवा जो भक्तिपूर्वक सुनता है, उसको उसी परम पद की प्राप्ति होती है, जहाँ साक्षात् महेश्वर विराजमान रहते हैं॥६२॥

**॥ इस प्रकार स्कन्दमहापुराण के केदारखण्ड में गङ्गाद्वार का माहात्म्यवर्णन नामक एक सौ पन्द्रह अध्याय पूर्ण हुआ॥११५॥**

**[श्लोकसंख्या पूर्वागत-५४५+६२=६०७]**



# अथ षोडशाधिकशततमोऽध्यायः

## कुब्जाम्ररूपेण तपस्यतो रैभ्यस्यानुग्रहार्थं विष्णोरागमनम्

नारद उवाच

कुब्जाम्रकं महातीर्थं वद विस्तरतो मम।
यथेदं च समुत्पन्नं यथा पुण्यं हि चाऽभवत्॥१॥
केन केन तपस्तप्तं केऽवापुः परमां गतिम्।
कानि तीर्थानि चैवात्र कियन्मानं सुपुण्यदम्॥२॥
एतत् सर्वं समासेन विस्तराद् वद मे प्रभो।
त्वत्समो नास्ति त्रैलोक्ये भक्तवत्सलतां गतः॥३॥

स्कन्द उवाच

श्रृणु नारद यत्नेन गुह्यं क्षेत्रं परं हरेः।
यस्य स्मरणमात्रेण शतजन्मसमुद्भवैः॥४॥

---

## कुब्जाम्र के रूप में तपस्या करते हुए रैभ्य मुनि पर कृपा करने के लिए विष्णु का अवतरण

**नारद ने कहा**

आप कुब्जाम्रक तीर्थ के विषय में मुझसे विस्तारपूर्वक बतलाइये। जिस प्रकार इसकी उत्पत्ति हुई और जिस प्रकार यह परम पवित्र हुआ।।१।।

यहाँ किन-किन लोगों ने तप किया, किन लोगों को परम गति की प्राप्ति हुई तथा इस स्थान में कितने तीर्थ निवास करते हैं एवं इस पुण्यदायक क्षेत्र का मान कितना है।।२।।

हे प्रभो! इन सभी विषयों को सम्यक् रूप से विस्तारपूर्वक मेरे प्रति वर्णन कीजिये; क्योंकि आपके सदृश भक्तवत्सल त्रिलोकी में अन्य कोई नहीं है।।३।।

**स्कन्द ने कहा**

हे नारद! यत्नपूर्वक श्रवण करो, भगवान् का यह क्षेत्र अत्यन्त गोपनीय है। जिसके स्मरण करने मात्र से मनुष्य सौ जन्मों के अर्जित सभी पापों से

मुच्यते सर्वपापैश्च विष्णुलोकं च गच्छति।
सान्निध्यं यत्र विष्णोर्हि नित्यं तिष्ठति नारद॥५॥
पुरा सप्तदशे प्राप्ते युगे योगीन्द्र माधवः।
मायां स्वीयां प्रविष्टोऽपि दृष्ट्वा चैकार्णवीं महीम्॥६॥
मधुकैटभौ दुरात्मानौ निजकर्णसमुद्भवौ।
साधयन्तौ च ब्रह्माणं त्रैलोक्यं क्षेप्तुमुद्यतौ॥७॥
हत्वा तौ हि दुराधर्षौ रचयित्वा च मेदिनीम्।
मेदसा दुष्टयोश्चैव ब्रह्मा वचनचोदितः[1]॥८॥
जगाम शतशो विप्र क्षेत्राणि धरणीतले।
द्रष्टुं भक्तान् स्वकीयाँश्च गङ्गाद्वारमुपागमत्॥९॥
यत्र रैभ्यो महातेजा उग्रे तपसि संस्थितः।
दशवर्षसहस्राणि तस्थावूर्ध्वकरो मुनिः॥१०॥

---

छुटकारा प्राप्त कर विष्णुलोक को जाता है। हे नारद! यहाँ भगवान् विष्णु की नित्य सन्निधि रहती है।।४-५।।

प्राचीनकाल में सत्रहवें युग के प्राप्त होने पर एक योगियों में श्रेष्ठ माधव हुए हैं। उन्होंने अपनी माया में प्रविष्ट होकर भूमि को एकमात्र समुद्रमय देखा था।।६।।

उन्हीं के कानों से समुत्पन्न दुष्ट स्वभाव वाले मधु और कैटभ उत्पन्न हुए थे। वे दोनों ब्रह्मा की आराधना कर त्रिलोकी को जल में डालने के लिए उद्यत हुए थे।।७।।

उन दोनों दुर्जेय राक्षसों को मार कर मेदिनी (पृथिवी) का निर्माण किया था। उन दोनों दुष्टों की मेदा से निर्माण करने के कारण पृथिवी का नाम मेदिनी हुआ।।८।।

इसके बाद ब्रह्मा के वचनों से प्रेरित होकर माधव पृथिवीतल पर स्थित अनेक क्षेत्रों में गये। तदनन्तर वे अपने भक्तों को देखने के लिए गङ्गाद्वार में आये।।९।।

वहाँ पर महान् तेजस्वी रैभ्य उग्र तपस्या में लीन थे। वे मुनि दस हजार वर्ष पर्यन्त बाहुओं को ऊपर उठाकर तपस्या में लीन थे।।१०।।

---

१. नोदित इति ग.।

ततो वर्षसहस्त्रं वै वायुभक्षो महातपाः।
शैवालचर्वणं पञ्चशतं वर्षाणि नारद॥११॥
इति वै तप्यमानस्य रैभ्यस्य मुनिपुङ्गव।
आम्ररूपं समासाद्य कुब्जरूपस्य माधवः॥१२॥
दर्शयामास भगवान् दर्शनं मुक्तिकारणम्।
सोऽपि रैभ्यो महाभागस्तं दृष्ट्वा जगतां पतिम्॥१३॥
जानुभ्यामवनिं गत्वा पुनः पुनरुदारधीः।
प्रोवाच मधुरं वाक्यं प्रासादार्थी महायशाः॥१४॥

रैभ्य उवाच

नमः कमलनाभाय विष्णवे प्रभविष्णवे।
सुनन्दाय सुभद्राय दुराधर्षाय ते नमः॥१५॥
हिरण्यबाहवे तुभ्यं हिरण्याक्षविमर्दिने।
नमो हिरण्यनाभाय हिरण्यचरुरूपिणे॥१६॥

---

तदनन्तर वे महातपस्वी एक सहस्र वर्षपर्यन्त वायु का भक्षण करते हुए तपस्या में स्थित रहे। हे नारद! वे मुनि सौ वर्षों तक शैवाल का चर्वण करते रहे।।११।।

हे मुनिश्रेष्ठ! इस प्रकार रैभ्य मुनि की तपस्या चलती रही। कुबड़े के रूप में माधव भगवान् आम्रवृक्ष के समीप जाकर मुक्ति के कारणभूत अपना दर्शन उस मुनि को करवाया। भाग्यशाली रैभ्य मुनि ने जगत् के प्रति उन माधव को देखा।।१२-१३।।

तदनन्तर उन उदारमति महर्षि ने भूमि के ऊपर घुटने टेककर उनकी प्रसन्नता के लिए मधुर वचन कहा।।१४।।

**रैभ्य ने कहा**

जिनके नाभि में कमल है, ऐसे प्रभविष्णु विष्णु को नमस्कार है। सुनन्द, सुभद्र और दुराधर्ष को नमस्कार है।।१५।।

हिरण्याक्ष का वध करने वाले तथा स्वर्णिम भुजाओं वाले को नमस्कार है। स्वर्णिम नाभि वाले हिरण्य चरु रूप को धारण करने वाले को नमस्कार है।।१६।।

हरिदश्वाय हरये हरिताङ्गाय हारिणे।
हयग्रीवाय हेयाय पराय हयबाहवे॥१७॥
अहङ्कारविमुक्ताय हेमसंस्थाय हारिणे।
नमो हरिणनेत्राय नमस्ते हरिबाहवे॥१८॥
नमो हिरण्यगर्भाय हृषीकेशाय ते नमः।
हविषे हविराशाय बर्हिपत्राय बर्हिषे॥१९॥
हेमाङ्गदाय बुद्धाय हिमाद्रिप्रकृतौकसे।
हिमाद्रितनयाधीशहृदयस्थाय हुङ्कृते॥२०॥
हेयाहेयविहीनाय सर्वाहिपतये नमः।
हृषीकेशाश्रमस्थाय हीरकाक्षाय ते नमः॥२१॥
हस्तिमस्तकसंस्थाय बहुहस्ताय ते नमः।
सहस्रहस्तरूपाय सहस्रकरमर्दिने॥२२॥

---

हरे रंग के अश्व वाले, पापों का हरण करने वाले, हरे अङ्गों वाले, मन का हरण करने वाले, हयग्रीव का अवतार धारण करने वाले, सबसे हेय और परे हयबाहु विष्णु को नमस्कार है।।१७।।

अहङ्कार से विमुक्त, स्वर्णिम पदार्थों में स्थित रहने वाले, सबका हरण करने वाले, हरिण के समान नेत्र वाले विष्णु को नमस्कार है। हरिबाहु तुमको नमस्कार है।।१८।।

हिरण्यगर्भरूप वाले तुमको नमस्कार है, हृषीकेषरूप तुमको नमस्कार है, हविरूप और हवि का भक्षण करने वाले, बर्हि (मयूर के) पत्र को धारण करने वाले, मयूर स्वरूप तुमको नमस्कार है।।१९।।

स्वर्णिम अङ्गद धारण करने वाले, बुद्धस्वरूप, हिमालय पर निवास करने वाले, हिमालयपुत्री गौरी के स्वामी शिव के हृदय में स्थित रहने वाले एवं हुङ्कार करने वाले विष्णु को नमस्कार है।।२०।।

हेय (त्याज्य) अहेय (ग्राह्य) रहित, सम्पूर्ण नागों के स्वामी, तुमको नमस्कार है। हृषीकेश के आश्रम में निवास करने वाले, हीरक के समान उज्ज्वल नेत्र वाले तुमको नमस्कार है।।२१।।

हाथी के मस्तक पर बैठने वाले, बहुत हाथों वाले तुमको नमस्कार है। हजारों हाथ वाले रूप को धारण करने वाले, हजार हाथ वाले कार्तवीर्यार्जुन का वध करने वाले तुमको नमस्कार है।।२२।।

**सहस्त्ररश्मिरूपाय फणासाहस्त्ररूपिणे।**
**सहसा कृतकार्याय सहसा भक्तिभाविने॥२३॥**

स्कन्द उवाच

**इति स्तुतो महाविष्णुस्तेन रैभ्येण धीमता।**
**उवाच मधुरं वाक्यं विनयावनतं स्थितम्॥२४॥**

श्रीभगवानुवाच

**वरं वरय भद्रं ते तव यद्धृदि वर्तते।**
**किञ्च वै काङ्क्षसे गावः किं वा राज्यमकण्टकम्[१]॥२५॥**
**अथ चेच्छसि कन्यानां सहस्त्रं दिव्यमुत्तमम्।**
**वररत्नसमृद्धानां हेमभाण्डविभूषितम्॥२६॥**
**सर्वासां दिव्यरूपाणां भवन्त्यप्सरसां गणाः।**
**ददामि ते वरं चैव रैभ्य यत्ते विचिन्तितम्॥२७॥**

---

सहस्त्ररश्मि सूर्य के स्वरूप वाले, हजार फण वाले शेषनाग के स्वरूप वाले, सहसा कार्य को पूर्ण करने वाले, सहसा भक्ति का समादर करने वाले आपको नमस्कार है।।२३।।

**स्कन्द जी ने कहा**

इस प्रकार बुद्धिमान् रैभ्य ने महाविष्णु की स्तुति की। तदनन्तर विष्णु ने विनय से अवनत उनसे मधुर वाणी में कहा।।२४।।

**श्रीभगवान् ने कहा**

तुम्हारे हृदय में जो अभिलाषा है, उस कल्याणकारी वर को माँग लो, क्या तुम गायों को चाहते हो अथवा निष्कण्टक राज्य की अभिलाषा करते हो।।२५।।

अथवा उत्तम रूप वाली सहस्त्रों दिव्य कन्याओं को प्राप्त करने की कामना करते हो, जो कन्याएँ श्रेष्ठ तत्त्वों से अलङ्कृत हों एवं सुवर्ण के पात्रादिकों से विभूषित हों।।२६।।

हे रैभ्य! यदि तुम दिव्यरूपवती अप्सराओं के समुदाय को चाहते हो, तो मैं तुम्हारे द्वारा विशेष रूप से सोचे गये वरदान को प्रदान कर दूँ।।२७।।

---

१. मसङ्कटमिति ग.।

रैभ्य उवाच

धन्योऽस्मि कृतकृत्योऽस्मि यस्य त्वं दृष्टिगोचरः।
न चाऽहं काञ्चनं गावो न स्त्रियो राज्यमेव च॥२८॥
नो काङ्क्षे जगतां नाथ त्वत्कृपां प्रार्थये विभो।
यदि प्रसन्नो भगवँल्लोकनाथ जनार्दन॥२९॥
तव चाऽत्र निवासं वै नित्यमिच्छामि माधव।
यावल्लोका धरिष्यन्ति तावदत्र मम प्रभो॥३०॥
स्नानं तव मम स्थानं तव नामामृतं भुवि।
भक्तिश्च स्याद् रमानाथ तव पादाम्बुजद्वये॥३१॥

स्कन्द उवाच

रैभ्यस्यैवं वचः श्रुत्वा भगवान् भूतभावनः।
वाढमित्येव विप्रेन्द्र सर्वमेतद् भविष्यति॥३२॥
यस्मादाम्रं समाश्रित्य कुब्जरूपेण वै त्वया।
दृष्टोऽस्मि रैभ्य तस्माद् वै कुब्जाम्रकमिति स्फुटम्॥३३॥

---

**रैभ्य ने कहा**

आज आप मेरी दृष्टि के सामने आ गये हैं, इसलिए मैं आज धन्य हो गया हूँ, कृतकृत्य हो गया हूँ। मैं न काञ्चन (सुवर्ण), न गौ, न स्त्री अथवा राज्य भी नहीं चाहता हूँ।।२८।।

हे जगत् के स्वामी सर्वव्यापक भगवान्! मैं केवल आपकी कृपा चाहता हूँ। दुष्ट जनों को उनके कर्मानुसार दुःख देने वाले हे जगन्नाथ! यदि आप मुझ पर प्रसन्न हैं, तो हे माधव! मैं यह चाहता हूँ कि आपका यहाँ नित्य निवास हो। हे प्रभो! जब तक ये लोक अधिष्ठित रहें, तब तक इस मेरे आश्रम में आपका निवास हो।।२९-३०।।

हे रमानाथ! आपका अमृतरूपी नाम भूमण्डल पर विद्यमान रहे; मैं यहाँ स्नान करता रहूँ, आपके चरणकमल में मेरी भक्ति बनी रहे।।३१।।

**स्कन्द जी ने कहा**

रैभ्य के वचन को सुनकर भगवान् भूतभावन ने कहा कि हे विप्रश्रेष्ठ! बहुत अच्छा, यह सब ऐसा ही होगा।।३२।।

हे रैभ्य! आम्र का आश्रय लेकर तुमने कुब्जरूप हमारा दर्शन किया है, इसलिए कुब्जाम्रक नाम से यह तीर्थ विख्यात होगा।।३३।।

**तीर्थमेतन्महापुण्यं करिष्यन्त्यविधानतः।**
**अस्मिन् क्षेत्रेऽपि ये मर्त्याः स्नानं दानं जपादिकम्॥३४॥**
**करिष्यन्ति महाभाग तत्सर्वं कोटिसंख्यकम्।**
**करिष्यन्ति निवासं च तीर्थेऽस्मिन् प्रवरे नराः॥३५॥**
**प्राप्स्यन्ति परमं स्थानं पुनरावृत्तिदुर्लभम्।**
**पापिनश्चापि विप्रेन्द्र मृता विष्णुमवाप्नुयुः॥३६॥**
**पितरस्तस्य हृष्यन्ति यस्यास्मिन् क्षेत्रके स्थितिः।**
**येऽपि बिन्दुप्रमाणं वै दद्युर्जलमनुत्तमम्॥३७॥**
**पितृभ्यस्तारितास्तेन संसारात् पितरो मुने।**
**परमाणुप्रमाणं च ये च दद्युर्हिरण्यकम्॥३८॥**
**दत्तं तेन भवेद्विप्र सहस्रं परिसंख्यया।**
**ये च दद्युर्महाभाग वासोगोभूषणादि च॥३९॥**

---

यह महान् पुण्यशाली तीर्थ इसी (कुब्जाम्रक) नाम से अभिहित किया जायेगा। जो मनुष्य इस क्षेत्र में स्नान, दान, जप आदि करेंगे।।३४।।

हे महाभाग! वह सब करोड़ गुना अधिक हो जायेगा। जो मनुष्य इस श्रेष्ठ तीर्थ में निवास करेंगे।।३५।।

उन्हें ऐसे परम स्थान की प्राप्ति होगी। जहाँ से पुनः लौटना नहीं होता है। हे विप्रश्रेष्ठ! यदि पापी भी इस क्षेत्र में मृत्यु को प्राप्त करेंगे, उन्हें भी विष्णु अर्थात् विष्णुलोक की प्राप्ति होगी।।३६।।

जो मनुष्य इस क्षेत्र में निवास करेंगे, उनके पितर भी प्रसन्न हो जायेंगे। हे मुनि! जो मनुष्य यहाँ पर अपने पितरों के निमित्त बिन्दुमात्र भी जल प्रदान कर देता है, वह संसार से अपने पितरों का उद्धार करता है। अर्थात् उनके पितरों की मुक्ति हो जाती है। जो लोग यहाँ परमाणुमात्र[१] भी सुवर्ण का दान करते हैं।।३७-३८।।

हे विप्र! उन्हें उस वस्तु के सहस्र संख्या दान करने का फल मिल जाता है। हे महाभाग! जो मनुष्य यहाँ वस्त्र, गौ, आभूषण आदि दान करते हैं।।३९।।

---

१. जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः। तस्य या षष्ठको भागः परमाणुः स उच्यते।। अर्थात् सूर्य का प्रकाश झरोखे से भीतर प्रविष्ट होता है, उसमें जो रजकण दिखाई पड़ता है, उसी रज के छठें भाग को परमाणु कहते हैं।

तेन दत्तं भवेदेव सर्वं वस्तु महामुने।
कुब्जाम्रके महातीर्थे वसामि रमया सह॥४०॥

## हृषीकेशनामकरणे हेतुः

हृषीकाणि पुरा जित्वा दर्शः सम्प्रार्थितस्त्वया।
यद्वाऽहं तु हृषीकेशो भवाम्यत्र समाश्रितः॥४१॥
ततोऽस्याऽपरकं नाम हृषीकेशाश्रितं स्थलम्।
त्रेतायुगे दाशरथिर्नाम्ना भरतसंज्ञितः॥४२॥
तुर्यो भागो मदीयो वै भविष्यति सहाग्रजः।
शङ्करः शङ्करः साक्षात् पुनर्मां स्थापयिष्यति॥४३॥
कलौ भरतनामानं वदिष्यन्ति महीतले।
कृते वाराहरूपेण त्रेतायां कृतवीर्यजम्॥४४॥
द्वापरे वामनं देवं कलौ भरतमेव च।
नमस्यन्ति महाभाग भवेयुर्मुक्तिभागिनः॥४५॥

---

हे महामुनि! उन्हें सम्पूर्ण वस्तुओं के दान करने का फल उपलब्ध हो जाता है। हे महामुनि! मैं लक्ष्मीसहित इस कुब्जाम्रक तीर्थ में सदा ही निवास करता हूँ।।४०।।

### हृषीकेश नामकरण में हेतु

तुमने हृषीक अर्थात् इन्द्रियों का दमन करके हमारे दर्शनों की आकांक्षा की थी। इसलिए मैं यहाँ हृषीकेश (इन्द्रियों का स्वामी) नाम से विख्यात होऊँगा।।४१।।

इसीलिए इस स्थान का दूसरा नाम हृषीकेशाश्रित होगा। त्रेतायुग में दशरथ के पुत्र भरत नाम वाले होंगे।।४२।।

वे अपने ज्येष्ठ भ्राता सहित हमारे चतुर्थ अंश से प्रादुर्भूत होंगे। कल्याण करने वाले शङ्कर भी यहाँ मेरी स्थापना करेंगे।।४३।।

कलियुग में लोग शिव को पृथ्वीतल में भरत नाम से विख्यात करेंगे। सत्ययुग में वाराहरूप से और त्रेतायुग में कार्तवीर्य नाम से विख्यात करेंगे।।४४।।

जो लोग द्वापर में वामन और कलियुग में भरत नाम से नमस्कार करेंगे, वे लोग मुक्ति के भागी बन जायेंगे।।४५।।

इत्युक्त्वा भगवान् विष्णू रैभ्यं नाम तपोनिधिम्।
तत्राऽन्तर्द्धानमापन्नः पश्यतस्तस्य नारद॥४६॥
इति ते कथितोत्पत्तिः क्षेत्रकुब्जाम्रकस्य हि।
श्रुत्वेमां सर्वपापेभ्यो मुच्यते नात्र संशयः॥४७॥

**।। इति श्रीस्कान्दे केदारखण्डे मायापुरीकुब्जाम्रकमाहात्म्यवर्णनं नाम षोडशाधिकशततमोऽध्यायः ।।११६ ।।**

---

हे नारद! भगवान् विष्णु रैभ्य नामक तपोनिधि से इस प्रकार कहकर उनके देखते-देखते वहीं पर अन्तर्धान हो गये।।४६।।

इस प्रकार हमने तुमसे कुब्जाम्रक नामक तीर्थ की उत्पत्ति का आख्यान कह सुनाया। इसका श्रवण करने से मनुष्य निश्चित ही मुक्त हो जाता है।।४६।।

**।। इस प्रकार स्कन्दमहापुराण के अन्तर्गत केदारखण्ड में एक सौ सोलह अध्याय पूर्ण हुआ।।११६।।**

**[श्लोकसंख्या पूर्वागत-६०७+४७=६५४]**



# अथ सप्तदशाधिकशततमोऽध्यायः

## कुब्जाम्रकतीर्थसीमानिरूपणम्

नारद उवाच

कियन्मानं परं क्षेत्रं कानि तीर्थानि तत्र वै।
किं तत्र पुण्यं लभते स्नानाद् दानात् तथाऽर्चनात्॥१॥
उत्पत्तिं चैव माहात्म्यं सर्वं विस्तरतो वद।
केन केन फलं प्राप्तमत्र क्षेत्रे शिवात्मज॥२॥
के के परां गतिं प्राप्ता हृषीकेषाश्रयात् तथा।
सर्वं विस्तरतो ब्रूहि श्रोष्यमाणाय मे प्रभो॥३॥

स्कन्द उवाच

साधु पृष्टं त्वया विप्र कुब्जाम्रकसुतीर्थकम्।
सुन्देश्वरीं समारभ्य यावद्धैमवती नदी॥४॥

---

### कुब्जाम्रक (हृषीकेश) क्षेत्र की सीमा का निरूपण

**नारद ने कहा**

उस परम श्रेष्ठ तीर्थ का प्रमाण कितना है, यहाँ कौन-कौन अन्य तीर्थ हैं। साथ ही वहाँ स्नान, दान और आपके पूजन करने से किस पुण्य की प्राप्ति होती है।।१।।

हे शिवकुमार! उस क्षेत्र की उत्पत्ति एवं उसके माहात्म्य का वर्णन विस्तारपूर्वक मुझसे करें। यहाँ पर किन-किन लोगों ने तपस्या की है, उसे भी कहें।।२।।

हे प्रभो! हृषीकेश क्षेत्र का आश्रय लेने से किन व्यक्तियों को परम गति का लाभ हुआ है। श्रवण करने में तत्पर मुझसे विस्तारपूर्वक वर्णन करें।।३।।

**स्कन्द ने कहा**

हे विप्र! तुमने अच्छा प्रश्न किया है, यह कुब्जाम्रक नामक सुतीर्थ है। सुन्देश्वरी नदी से आरम्भ कर हेमवती नदीपर्यन्त इसका क्षेत्र है।।४।।

तावत्कुब्जाम्रकं क्षेत्रं पापिनामपि मुक्तिदम्।
करमाने स्थले तत्र तीर्थानां पञ्चकं ध्रुवम्॥५॥
तत्राऽपि विप्र श्रेष्ठानि स्वर्गदान्यपि दर्शनात्।
शृणु तीर्थानि पुण्यानि मुक्तिदानि परात्मनाम्॥६॥

## मायातीर्थस्य माहात्म्यम्

मायातीर्थं परं ख्यातं यत्र दृष्टो जनार्दनः।
गङ्गा च यमुना चापि द्वयं यत्र समास्थितम्॥७॥
तस्मिन् कृतोदको विप्र तारयेत् कुलसप्तकम्।
सकृत् स्नातोऽपि भवनं कुबेरस्य लभेन्मुने॥८॥

## मायाक्षेत्रस्योत्पत्तिः, तदाख्याने सोमशर्मणो वृत्तान्तम्

शृणूत्पत्तिं प्रवक्ष्यामि मायाक्षेत्रस्य नारद।
सर्वपापहरां दिव्यां मोक्षस्वर्गानुदर्शिनीम्॥९॥

---

यही कुब्जाम्रक क्षेत्र है। यह क्षेत्र पापियों को भी मुक्ति प्रदान करने वाला है। वहाँ हस्तप्रमाण की दूरी से पाँच तीर्थ हैं।।५।।

हे विप्र! वे पाँचों तीर्थ केवल दर्शन करने मात्र से स्वर्ग प्रदान करने वाले हैं। पुण्यशाली व्यक्तियों को मुक्ति प्रदान करने वाले उन तीर्थों का श्रवण करो।।६।।

### मायातीर्थ का माहात्म्य

जहाँ भगवान् जनार्दन का दर्शन हुआ था, उसे मायातीर्थ कहा जाता है। वहाँ गङ्गा और यमुना दोनों स्थित हैं।।७।।

उसमें पितरों को जल-दान करने से सात कुल का उद्धार हो जाता है। हे मुनि! उसमें एक बार भी स्नान करने से कुबेर के धाम की प्राप्ति होती है।।८।।

### मायाक्षेत्र की उत्पत्ति के आख्यान में सोमशर्मा का वृत्तान्त

हे नारद! सुनो, अब मैं मायाक्षेत्र की उत्पत्ति का वर्णन करता हूँ। यह क्षेत्र सम्पूर्ण पापों का हरण करने वाला, दिव्य मोक्ष और स्वर्ग के मार्ग को दिखलाने वाला है।।९।।

**पुरा कृतयुगे विप्रः सोमशर्मेति विश्रुतः।**
**तपस्वी निरपेक्षश्च सत्यवादी जितेन्द्रियः॥१०॥**
**तपस्तताप परमं जितात्मा पापवर्जितः।**
**ग्रीष्मे पञ्चतपाश्चैव वर्षायां वृष्टिसाहकः॥११॥**
**हेमन्ते जलधाराभिः सिच्यमानः समन्ततः।**
**इति वर्षसहस्रं वै ततोऽभूदूर्ध्वबाहुकः॥१२॥**
**एकपादेन तस्थौ च शिलायां नियतासनः।**
**सहस्रद्वितयं तस्य ययावेवं महामते॥१३॥**
**वायुभक्षः सहस्रं च सहस्रं तूर्ध्वपादकः।**
**एवं वै तप्यमानस्य प्रसन्नोऽभूज्जनार्दनः॥१४॥**

श्रीभगवानुवाच

**साधु साधु महाभाग सोमशर्मन् द्विजोत्तम।**
**वरं वरय भद्रं ते यदस्त्यभिमतं तव॥१५॥**

---

प्राचीनकाल में कृतयुग में सोमशर्मा नामक एक ब्राह्मण थे। वे तपस्वी, निरपेक्ष भाव से रहने वाले, सत्यवादी और जितेन्द्रिय थे।।१०।।

वे पापरहित होकर अपने आत्मा का निग्रह कर उग्र तप का आचरण करते थे। वे ग्रीष्मकाल में पञ्चाग्नि का अनुष्ठान करते थे और वर्षा ऋतु में वृष्टि के आघात को सहन करते थे।।११।।

हेमन्त ऋतु में चारों ओर से जल की धारा से सिञ्चित होते रहते थे। इस प्रकार उन्होंने ऊपर बाहु किये हुए एक हजार वर्ष तक तपस्या का अनुष्ठान किया था।।१२।।

उस समय शिला के ऊपर अपने आसन को नियत कर एक पैर से ही स्थित रहते थे। हे महामति! इस प्रकार तप करते हुए उनके दो हजार वर्ष व्यतीत हो गये।।१३।।

तदनन्तर उन्होंने एक हजार वर्ष तक केवल वायुभक्षण कर व्यतीत कर दिया। इसके बाद वे एक हजार वर्ष तक ऊपर पैर कर स्थित रहे। इस प्रकार तप करने वाले सोमशर्मा पर भगवान् जनार्दन प्रसन्न हुए।।१४।।

**श्रीभगवान् ने कहा**

हे द्विजश्रेष्ठ! सोमशर्मन्! महाभाग! तुम धन्य हो, तुम्हारा कल्याण हो, जो तुम्हारा अभीष्ट हो, उसे वर के रूप में मुझसे माँग लो।।१५।।

**प्रसन्नोऽस्मि न सन्देहस्तपसाऽनेन सुव्रत।**
**दुर्लभं तव विप्रेन्द्र नास्ति त्रैलोक्यमण्डले॥१६॥**

## मायास्वरूपवर्णनम्

सोमशर्मोवाच

**यदीच्छसि वरं दातुं प्रसन्नो यदि वै मयि।**
**जानीयां तव मायां हि मुग्धं त्रैलोक्यकं यया॥१७॥**

श्रीभगवानुवाच

**मम मायां महाभाग न जानन्ति दिवौकसः।**
**ब्रह्माद्या ये पुरा सृष्टाः सा माया मम कीर्तिता॥१८॥**
**वर्षन्ति च महामेघाः सा माया मम कीर्तिता।**
**यया निर्जलतां यान्ति सा माया मम कीर्तिता॥१९॥**
**चन्द्रो यत् क्षीयते पक्षे पक्षे पूर्णत्वमेति च।**
**मायैषा मम विप्रेन्द्र ग्रहनक्षत्रतारकाः॥२०॥**

---

सुन्दर व्रत का आचरण करने वाले हे विप्रश्रेष्ठ! तुम्हारे इस तपस्या से मैं प्रसन्न हूँ, इसमें सन्देह नहीं है। इस तपस्या के प्रभाव से तीनों लोकों में कोई भी पदार्थ तुम्हारे लिये दुर्लभ नहीं है।।१६।।

### माया के स्वरूप का वर्णन

**सोमशर्मा ने कहा**

यदि आप मुझ पर प्रसन्न हैं और मुझे वर प्रदान करना चाहते हैं, तो मैं आपकी उस माया को जानना चाहता हूँ, जिसने त्रिलोकी को मोह में डाल रखा है।।१७।।

**श्रीभगवान् ने कहा**

हे महाभाग! हमारी माया ऐसी प्रबल है कि जिनकी रचना सबसे पहले की गयी थी, वे ब्रह्मा आदि देवता भी उस माया को नहीं जानते हैं।।१८।।

जिसके प्रभाव से मेघ जल की वर्षा करते हैं, वही मेरी माया कही गयी है। जिससे पुनः वे निर्जल हो जाते हैं, वही मेरी माया है।।१९।।

हे विप्रश्रेष्ठ! एक पक्ष में चन्द्रमा क्षीण होता है, पुनः दूसरे पक्ष में परिपूर्ण हो जाता है, ग्रह, नक्षत्र और तारा आदि भी हमारी माया के प्रभाव से प्रभावित हैं।।२०।।

हेमन्तर्तौ च सलिलं कूपे कोष्णं विभाति च।
शीतलं च तथा ग्रीष्मे सा माया मम कीर्तिता॥२१॥
उदेति सविता प्राच्यां प्रतीच्यामस्तमेति च॥२२॥
शोणितं च तथा रेतः संयुक्तं स्यान्महामते।
गर्भे चोत्पद्यते जन्तुस्तन्माया प्रबला मम॥२३॥
जठराग्नौ प्रदीप्ते हि गर्भाशयगतो मुने।
मातृभक्तानुसारेण प्रयाति प्राणकूटकः॥२४॥
पूर्वजन्मसहस्राणि पापपुण्ये कृताकृते।
विजानात्यवशो जन्तुर्गर्भे मायाबलं मम॥२५॥
जानाति सुखदुःखे च तथाऽऽत्मानं च विन्दति।
अङ्गुल्यश्चरणौ चैव भुजौ शीर्षं कटिस्तथा॥२६॥
पृष्ठं तथोदरं चैव दन्तौष्ठपुटनासिकाः।
कर्णादिचक्षुरादीनि सर्वं मायाकृतं मम॥२७॥

---

हेमन्त ऋतु में कूप का जल कुछ उष्ण हो जाता है और ग्रीष्म ऋतु आने पर वह शीतल हो जाता है, यही हमारी माया कहलाती है।।२१।।

सूर्य पूर्व दिशा में उदित होता है और पश्चिम दिशा में अस्त होता है, यह मेरी माया ही है।।२२।।

हे महामतिमान्! रक्त और वीर्य के संयोग से गर्भ में जीव की उत्पत्ति होती है, यह मेरी प्रबल माया ही है।।२३।।

हे मुनि! जब यह प्राणी गर्भाशय में स्थित होता है, उस समय जठराग्नि प्रदीप्त होती है, उस समय माता के ही भोजन से उसके प्राण की पुष्टि होती है।।२४।।

गर्भ में स्थित जीव अवश होते हुए भी हजारों पूर्व जन्म के किये गये पाप-पुण्यों को और अपने कृत्य तथा अकृत्य को मेरी माया के बल से जानता है।।२५।।

उस समय गर्भस्थ जीव सुख-दुःख तथा अपने आपको जानता है। गर्भ में ही अङ्गुलियाँ, चरण, भुजा, शिर तथा कमर भी मेरी माया से निर्मित हो जाते हैं।।२६।।

उसी समय पीठ, उदर, दाँत, ओष्ठपुट, नासिका, कर्ण और नेत्र आदि सभी अङ्ग हमारी माया के द्वारा ही निर्मित किये जाते हैं।।२७।।

**बधिरस्यापि व्यापारोऽन्धस्यापि हृत्सुनेत्रता।**
**मूकस्य चेष्टनं ज्ञानं सर्वं मायाकृतं मम॥२८॥**
**मूढत्वं संसृतौ चैव जातमात्रे महामते।**
**धर्माधर्मपरिज्ञानं विस्मृतिश्च तथा मम॥२९॥**
**मायया मे महाभाग योनियन्त्राद् बहिर्गतिः।**
**कृमिर्व्रणादिव प्राण्यपवृत्तोऽपानवायुभिः॥३०॥**
**निष्क्रम्य मम मायाया वशमाप्नोति सत्वरम्।**
**जरायुजाश्चाण्डजाश्च स्वेदजा द्विजपुङ्गव॥३१॥**
**उद्भिजाः प्राणिनश्चैव जायन्ते निजरूपतः।**
**श्वेतकृष्णादयो भावा मायया मम देहिनाम्॥३२॥**
**शब्दः स्पर्शस्तथा गन्धो रूपं चापि तथा रसः।**
**मायया मम भाव्यन्ते लीयन्ते च द्विजेश्वर॥३३॥**

---

बहरे को सुनाई देना, अन्धे को उत्तम नेत्र हो जाना, गूँगे को बोलने की चेष्टा और ज्ञान, यह सब कुछ हमारी माया से ही होता है।।२८।।

हे महामते! इस संसार में जन्म लेते ही अज्ञानता, धर्म और अधर्म का ज्ञान तथा मेरी विस्मृति हो जाती है।।२९।।

हे महाभाग! हमारी माया के द्वारा ही व्रण से कीड़े के समान अपानवायु से प्राणी योनियन्त्र के माध्यम से गर्भ से बाहर निकलता है।।३०।।

वहाँ से बाहर निकलते ही जीव प्राणी हमारी माया के वशीभूत हो जाता है। जरायुज (जरे से उत्पन्न होने वाले पशु और मनुष्य), अण्डज (अण्डे से उत्पन्न होने वाले पक्षी आदि), स्वेदज (पसीने से उत्पन्न होने वाले जूँ, लीख, खटमल आदि) हैं।।३१।।

उद्भिज (पृथ्वी का भेदन कर उत्पन्न होने वाले वृक्ष आदि) प्राणी ये सभी योनि के जीव अपनी-अपनी आकृति के अनुसार श्वेत, कृष्ण आदि भाव हमारी माया से ही धारण करते हैं।।३२।।

शब्द, स्पर्श, रूप, रस और गन्ध ये सब हमारी माया से ही उपलक्षित होते हैं। हे द्विजश्रष्ठ! अन्त में पुनः लीन हो जाते हैं।।३३।।

समुद्राश्च तथा दिव्यभौमैर्जलैरलङ्कृताः।
पूर्यमाणा न वर्द्धन्ते मायया मम सर्वतः॥३४॥
वर्षासु बहुतोयाश्च सरितः पल्वलानि च।
सरांसि वृद्धिमायान्ति शुष्यन्ति तपनेऽखिलाः॥३५॥
एष मायाप्रभावो मे मेघा गृह्णन्ति यज्जलम्।
लवणं लवणाब्धेश्च वर्षन्ति मधुरं पुनः॥३६॥
एष मायाप्रभावो मे हिमवच्छिखरादधः।
मन्दाकिनी समाख्याता गङ्गा जाता ततः परम्॥३७॥
वन्यौषद्ध्यौ वीर्यरूपा जीवन्ति प्राणिनो द्विजाः।
पुनस्त एव चौषद्ध्यो नाशमायान्ति सत्वरम्॥३८॥
आयुक्षयपरिज्ञानं सर्वं वीर्यं हराम्यहम्।
जायमानोऽल्पतनुको यौवने च तथा महान्॥३९॥
अवस्थायां तृतीयायां जराव्याप्तः श्लथस्तथा।
पश्चादिन्द्रियनाशश्च सर्वं मायाबलं मम॥४०॥

---

समुद्र भी दिव्य जल और रत्नादिकों से परिपूर्ण हो रहे हैं और अपनी मर्यादा से अधिक नहीं बढ़ते, यह भी हमारी माया ही है।।३४।।

वर्षा ऋतु में नदियाँ और छोटे-छोटे जलाशय तथा सरोवर आदि प्रभूत जल होने के कारण वृद्धि को प्राप्त होते हैं, किन्तु ग्रीष्म ऋतु के आने पर वे सभी सूख जाते हैं।।३५।।

यह मेरी माया का ही प्रभाव है कि मेघ खारे समुद्र से खारे जल को ग्रहण करता है; किन्तु उसे मधुर रूप में वर्षा करता है।।३६।।

यह भी मेरी ही माया का प्रभाव है कि जो हिमालय के शिखर के नीचे मन्दाकिनी कही जाती हैं, वही इसके आगे गङ्गा नाम से विख्यात है।।३७।।

हे द्विज! पराक्रम को प्रदान करने वाली वन की औषधियाँ प्राणियों को जीवित करती है; किन्तु पुनः वे ही औषधियाँ शीघ्र नष्ट हो जाती हैं।।३८।।

जब आयु के क्षय का परिज्ञान होता है, तब देहधारियों के सम्पूर्ण पराक्रम का अपहरण कर लेता हूँ। जन्म के समय प्राणी का शरीर छोटा सा होता है; किन्तु युवावस्था में महान् हो जाता है।।३९।।

जब तीसरी वृद्धावस्था प्राप्त होती है, तब वृद्धभाव प्राप्त होने के कारण सभी अङ्ग शिथिल हो जाते हैं तथा अन्त में इन्द्रियों की शक्ति का नाश हो जाता है, यह सब कार्य हमारी माया से ही होता है।।४०।।

अणुमात्रेऽश्वत्थबीजे वापितेऽङ्कुरसम्भवः।
पुनः पत्रादिकोत्पत्तिस्तथा शाखाः प्रशाखिकाः॥४१॥
जायन्ते मायया विप्र पुनर्बीजं तथाङ्कुरम्।
यो यो विभूतिमाञ्जन्तुर्दरिद्रश्च तपोधन॥४२॥
मायामेतामहं कृत्वा तोषयामि दिवौकसः।
ब्रह्मा सृजति लोकं हि चेति सर्वे वदन्ति हि॥४३॥
मायामयं वपुः कृत्वा ह्यहमेव सृजामि वै।
लोका वदन्ति शक्रोऽयं देवान् पालयति द्विज॥४४॥
अहमेवेन्द्रवपुषा पालयामि दिवौकसः।
मायया यमरूपेण नाश्यते च मया जगत्॥४५॥
कौबेरं रूपमास्थाय धनानां रक्षिता ह्यहम्।
इन्द्रमायां समाश्रित्य वृत्रो मे नाशितः पुरा॥४६॥
रुद्रमायां समाश्रित्य त्रिपुरोऽपि विनाशितः।
वायुमायां समाश्रित्य प्राणिनां देहसंस्थितः॥४७॥

---

जब हम अणुमात्र अश्वत्थ का बीज बोते हैं, उस समय केवल अङ्कुर उत्पन्न होता है, तदनन्तर पत्र आदि, इसके बाद शाखा-प्रशाखा आदि की उत्पत्ति होती है।।४१।।

हे विप्र! हमारी माया से ही पुनः बीज और अङ्कुर का क्रम चलता रहता है। हे तपोधन! संसार में जो ऐश्वर्यशाली अथवा दरिद्र जीव देखे जाते हैं, यह सब कार्य हमारी माया से ही होता है।।४२।।

हम अपनी माया करके ही देवताओं को सन्तुष्ट करते हैं। सब लोग यही कहते हैं कि ब्रह्मा जी लोक की रचना करते हैं।।४३।।

किन्तु मैं ही मायामय देह धारण कर संसार की रचना करता हूँ। हे द्विज! लोग यह कहते हैं कि ये इन्द्र देवों का पालन करते हैं।।४४।।

मैं ही इन्द्र का शरीर धारण कर देवताओं का पालन करता हूँ। अपनी माया से यम का रूप धारण कर मैं ही संसार का नाश करता हूँ।।४५।।

कुबेर का रूप धारण कर मैं ही धन की रक्षा करता हूँ। प्राचीनकाल में मैंने इन्द्र की माया का आश्रय लेकर वृत्रासुर का विनाश किया था।।४६।।

मैंने ही रुद्र की माया का आश्रय लेकर त्रिपुर को भी विनष्ट किया था। मैं ही वायु की माया में आश्रित होकर प्राणियों के शरीर में निवास करता हूँ।।४७।।

जाठराग्निरहं भूत्वा प्राणिनां देहमाश्रितः।
चतुर्विधं पचाम्यन्नं मायैषा मम कीर्तिता॥४८॥
वाडवं रूपमास्थाय सामुद्रं जलमन्वहम्।
पिबामि मायया विप्र समुद्रे कृतसंश्रयः॥४९॥
सामुद्रं रूपमास्थाय सन्धरामि जगद् बहिः।
लोकानाश्रित्य भूरादीञ्जगद्रूपोऽस्मि मायया॥५०॥
सौरीं मायां समाश्रित्य सन्तरामि जगत् त्रयम्।
मायां मेघमयीं कृत्वा सन्धरामि जलं तथा॥५१॥
राजरूपं समाश्रित्य पालयामि स्वमायया॥५२॥
अहमेव पुरा मत्स्यो वेदोद्धारं तथाऽकरम्।
कौर्मीं मायां समाश्रित्य धृतो वै मन्दराचलः॥५३॥
वाराहरूपमाश्रित्य धरोद्धारः कृतो मया।
नारसिंहं वपुर्धृत्वा हिरण्यकशिपुर्हतः॥५४॥

---

मैं ही जठराग्नि रूप से प्राणियों के देह में आश्रित रहकर चार प्रकार के अन्न (खाद्य, लेह्य, चोष्य और पेय) को पकाता हूँ, यह मेरी माया ही कही गयी है।।४८।।

हे विप्र! वडवानल का रूप धारण कर समुद्र में निवास करके प्रतिदिन समुद्र के जल का पान करता हूँ।।४९।।

पुनः समुद्र के रूप में मैं बाहर से जगत् को धारण करता हूँ। मैं अपनी माया से भूः आदि लोकों का आश्रय लेकर जगत् के रूप में विद्यमान हूँ।।५०।।

सूर्य के रूप में माया का आश्रय लेकर मैं ही तीनों लोकों का सन्तरण करता हूँ। इसी प्रकार मेघमयी माया करके मैं जल को धारण करता हूँ।।५१।।

मैं ही अपनी माया के द्वारा राजा का रूप धारण कर संसार का पालन करता हूँ।।५२।।

प्राचीनकाल में मैंने ही मत्स्य का रूप धारण कर वेदों का उद्धार किया था। इसके बाद कूर्म की माया का आश्रय लेकर मन्दराचल को धारण किया था।।५३।।

मेरे द्वारा ही वाराह (सूकर) का रूप धारण कर धरा (पृथिवी) का उद्धार किया गया था। मनुष्य और सिंह का शरीर धारण कर हिरण्यकशिपु का वध किया गया था।।५४।।

**वामनं रूपमास्थाय बलिर्नीतो रसातले।**
**भूत्वा परशुरामोऽहं क्षत्रस्यान्तकरोऽभवम्॥५५॥**
**भूमेर्भारापनोदश्च रामरूपेण वै कृतः।**
**कृष्णमायां समाश्रित्य भूमिभारो हृतो मया॥५६॥**
**योगमायां समाश्रित्य बदरीविपिने स्थितः।**
**कल्किर्भूत्वा म्लेच्छजातीन्नाशयिष्ये स्वमायया॥५७॥**
**यत् किञ्चिद् दृश्यते विप्र जगत्स्थावरजङ्गमम्।**
**मायैषा मम विप्रेन्द्र सर्वमेतत् प्रकीर्तितम्॥५८॥**

**॥ इति श्रीस्कान्दे केदारखण्डे कुब्जाम्रकमाहात्म्यवर्णनं नाम सप्तदशाधिकशततमोऽध्यायः ॥११७॥**

---

वामन रूप धारण कर राजा बलि को पाताल ले गया था। परशुराम का अवतार लेकर क्षत्रियों का अन्त मैंने ही किया था॥५५॥

मैंने ही राम के रूप से भूमि के भार को दूर किया था। कृष्ण का रूप ग्रहण कर हमने ही भूमि के भार का उद्धार किया था॥५६॥

हमने ही योगमाया का आश्रय लेकर बदरीवन में स्थिति की है। अपनी माया से कल्कि का अवतार लेकर म्लेच्छों का विनाश करूँगा॥५७॥

हे विप्र! यह जो कुछ भी स्थावर या जङ्गम जगत् दृष्टिगोचर हो रहा है, वह सब मेरी माया ही कही गयी है॥५८॥

**॥ इस प्रकार स्कन्दमहापुराण के केदारखण्ड के अन्तर्गत एक सौ सत्रहवाँ अध्याय पूर्ण हुआ॥११७॥**

**[श्लोकसंख्या पूर्वागत-६५४+५८=७१२]**



# अथाष्टादशाधिकशततमोऽध्यायः

## भगवता वार्यमाणेऽपि सोमशर्मणा भगवन्तं मायादर्शनयाचना

सोमशर्मोवाच

**प्रोक्ता माया त्वया देव जगदेतच्चराचरम्।**
**कथं परमहं जाने तव मायां दुरत्ययाम्॥१॥**
**स्वकर्मणा ह्ययं लोकः कर्मसु वै प्रवर्त्तते।**
**त्वन्मायाप्रेरितो जन्तुः करोतीति कथं नरः॥२॥**
**तस्माद्यथा महाविष्णो तव मायां दुरत्ययाम्।**
**जानीयाममितां देव वृणे वरमिमं ध्रुवम्॥३॥**

श्रीभगवानुवाच

**मम माया महाभाग दुर्गम्या च सुरैरपि।**
**अन्यं वरं वृणुष्व त्वं धनं रत्नं वसुन्धराम्॥४॥**

---

**भगवान् के मना करने पर भी सोमशर्मा द्वारा माया-दर्शन की याचना**

**सोमशर्मा ने कहा**

हे देव! आपने इस समस्त चराचर जगत् को अपनी माया कहकर कीर्तन किया है; किन्तु आपकी इस मनोहारिणी माया को मैं कैसे जान सकता हूँ।।१।।

अपने-अपने कर्मों के द्वारा ही यह संसार कर्मों के आचरण में प्रवृत्त होता है। किन्तु आपकी माया से प्रेरित होकर जीव कैसे कार्य करने लगता है।।२।।

हे विष्णु! जिस प्रकार मैं आपकी इस दुर्ज्ञेय असीम माया को भली-भाँति जान सकूँ, निश्चित ही मैं यही वर की याचना करता हूँ।।३।।

**भगवान् ने कहा**

हे महाभाग! हमारी माया तो देवताओं के द्वारा भी दुर्बोध्य है, इसलिए तुम धन या भूमि सम्बन्धी किसी अन्य वर की याचना करो।।४।।

**अथवा स्वर्गगमनं रम्भासेवनमेव च।**
**स्वच्छन्दगमनं चैव भूरादिषु महामते॥५॥**
**अथ चेच्छसि त्रैलोक्ये राज्यं निहतकण्टकम्।**
**अथ चेच्छसि पुत्रादींस्तथा वाचां प्रचारणम्॥६॥**
**अवध्यत्वं सुरेन्द्राद्यैरजेयत्वं सुरासुरैः।**
**अमरत्वं तथान्यद्वै मन ईहितमेव च॥७॥**
**ददामि सर्वं प्रवरं विना मायां तपोनिधे।**
**मायां द्रष्टुं न योग्योऽसि तपसां निधिरेव हि॥८॥**

सोमशर्मोवाच

**न काङ्क्षे भगवन् विष्णो वरमन्यत्तथा महत्।**
**मायां दर्शय मे स्वीयां यदि तप्तं मया तपः॥९॥**

स्कन्द उवाच

**वारं वारं महाभाग मुनिना सोमशर्मणा।**
**याचितोऽपि रमाकान्तो न ददौ तद्वरं द्विज॥१०॥**

---

हे महामति! अथवा स्वर्गगमन, रम्भा अप्सरा का सम्भोग या भू आदि लोकों में स्वच्छन्द गमन की याचना कर लो।।५।।

त्रिलोकी में निष्कण्टक राज्य अथवा पुत्र आदि या वाणी का विलास, इसमें जो कुछ चाहते हो, उसे माँग लो।।६।।

इन्द्रादि देवताओं के हाथ से भी अवध्यत्व अथवा देवता और असुरों के द्वारा अजेयत्व अथवा अमरत्व इनमें जो कुछ भी तुम्हारे मन में अभीप्सित हो।।७।।

हे तपोनिधि! केवल एक माया के दर्शन को छोड़कर अन्य सब कुछ वरदान के रूप में मैं तुम्हें दे सकता हूँ; क्योंकि तुम तपस्या के निधि हो, इसलिए माया के दर्शन के अधिकारी नहीं हो।।८।।

**सोमशर्मा ने कहा**

हे भगवान् विष्णु! मैं बड़े से बड़े अन्य किसी वर को नहीं चाहता हूँ, यदि मैंने तप किया है, तो आप अपनी माया को मुझे दिखायें।।९।।

**स्कन्द जी ने कहा**

हे महाभाग! यद्यपि सोमशर्मा ने इस विधि से बार-बार प्रार्थना की, तथापि रमा के स्वामी विष्णु ने इस वर को उन्हें प्रदान नहीं किया।।१०।।

एवं तेन तपस्तप्तं त्रिवारं विष्णुदर्शनम्।
वार्यमाणोऽपि हरिणा पुनर्मायामयाचत॥११॥
भक्तानुकम्पी भगवानुवाच च शुभां गिरम्।
मायां मे सोमशर्मंस्त्वं[1] मदीयां परिवेत्स्यसे॥१२॥
इत्युक्त्वाऽन्तर्दधे विष्णुस्तस्मिन् क्षेत्रे शुभावहे।
सोमशर्माऽपि गङ्गायां ययौ स्नातुं द्विजोत्तम॥१३॥
धृत्वा कुण्डीं त्रिदण्डं च धौतमासनमेव च।
कमण्डलुं पुस्तकं च सोमशर्मा सरित्तटे।
संन्यस्य प्रययौ स्नातुं गङ्गायां नियतव्रतः॥१४॥
यावत्प्रविशते विप्र गङ्गायां नाभिमात्रतः।
तावद्धृतो महास्येन कच्छपेन महामुने॥१५॥
निगीर्णश्चर्वितश्चैव प्राणैस्त्यक्तो बभूव ह।
आकृष्टो यमदूतैश्च वायवीयवपुर्मुनिः॥१६॥

---

इस प्रकार उसने तीन बार तप किया और उसे भगवान् विष्णु के दर्शन हुए। यद्यपि नारायण ने उसे बार-बार निषेध किया, तथापि उन्होंने माया के अवलोकन करने की ही प्रार्थना की।।११।।

तब भक्तों पर अनुकम्पा करने वाले भगवान् ने शुभ वाणी में कहा— हे सोमशर्मन्! तुम हमारी माया को जानोगे।।१२।।

## सोमशर्मा द्वारा नरक का अवलोकन

यह कहकर भगवान् विष्णु वहीं कल्याणकारी क्षेत्र में अन्तर्धान हो गये। हे द्विजश्रेष्ठ! तदनन्तर सोमशर्मा भी किसी समय गङ्गा में स्नान करने के लिए गये।।१३।।

सोमशर्मा वहाँ नदी के तट पर कुण्डी, त्रिदण्ड, धोती, आसन, कमण्डलु और पुस्तक रखकर स्नान करने की कामना से गङ्गा में प्रविष्ट हुए।।१४।।

हे महामुनि! जैसे ही वे गङ्गा के नाभिपर्यन्त जल में प्रविष्ट हुए, उसी समय बहुत बड़े मुख वाले एक कच्छप ने उन्हें पकड़ लिया।।१५।।

वह कच्छप उन्हें निगल गया और चबा गया, जिससे वे प्राण से रहित हो गये। उनके वायवीय शरीर को यमदूत आकर्षित करने लगे।।१६।।

---

१. सोमशर्मस्त्वमिति ख.।

**मायानरकसामग्रीं ददर्श स महातपाः।**
**क्रकचैः पाट्यमानांश्च क्वथमानांश्च सर्वतः॥१७॥**
**ताड्यमानांश्च मुशलैर्हाहाकाररवांस्तथा।**
**ददर्श किङ्करांस्तत्र यमस्य परितो बहून्॥१८॥**
**सिंहाननान् वृकमुखान् विकृतान् विकृताननान्।**
**केचिद् गर्जन्ति केचित्तु साट्टहासास्तथापरे॥१९॥**
**भिन्धि भिन्धि च्छिन्धि च्छिन्धि भक्ष भक्षामि चापरः।**
**इति नानाविधा वाचः शुश्राव यममन्दिरे॥२०॥**
**दृष्टा पापगतिस्तेन तथा पुण्यगतिर्मुने।**
**त्रासयुक्तो महाभाग ददर्श विविधा गतीः॥२१॥**
**असिभिश्छिद्यमानाश्च चक्रक्षेपार्त्तिपीडिताः।**
**निगडैर्बध्यमानाश्च तप्तैरायसनिर्मितैः॥२२॥**

---

तदनन्तर उस महामुनि ने मायारूप नरक की सामग्री का अवलोकन किया। नारकी जीव कहीं आरे से चीरे जा रहे थे। पापी जीव चारों ओर उबाले जा रहे थे।।१७।।

वे सब मुसलों से पीटे जा रहे थे, इसलिए वे लोग हाहाकार के शब्द कर रहे थे। इस प्रकार उन्होंने वहाँ चारों ओर यमराज के दूतों को यातना देते हुए देखा।।१८।।

किन्ही-किन्ही यमदूतों का सिंह का मुख था। किसी का भेड़िये का मुख था, कोई विकृत शरीर और विकृत मुख वाले थे। कुछ यमदूत गर्जना कर रहे थे, तो दूसरे अट्टहास कर रहे थे।।१९।।

कोई कहता काटो, काटो कोई कहता छेदन करो, छेदन करो, कोई कहता था कि मैं इसे भक्षण करने जा रहा हूँ। इस प्रकार सोमशर्मा ने यमराज के भवन में नाना प्रकार के शब्द का श्रवण किया।।२०।।

हे मुनि! उन्होंने वहाँ पापियों की गति को देखा, साथ ही पुण्यों की गति का भी अवलोकन किया। हे महाभाग! इस प्रकार उनसे भयभीत होकर वहाँ अनेक प्रकार की गतियों को देखा।।२१।।

उन्होंने वहाँ पापियों को खड्ग से काटे जाते हुए देखा। कहीं पापी चक्र के प्रहार से पीड़ित हो रहे थे। कहीं कोई पापी गरम लोहे की बनी बेड़ियों से बाँधे जा रहे थे।।२२।।

त्रिशूलैर्भेद्यमानाश्च भिन्नाश्चेष्टतरं तथा।
अपरे भिद्यमानाश्च भिन्नाङ्गाश्च तथाऽपरे॥२३॥
लोहस्तम्भेषु तप्तेषु बद्धान् दृष्ट्वा मुनिस्तथा।
नदीं वैतरणीं तत्र पूयशोणितवाहिनीम्॥२४॥
तथा कृमिकुलैश्छन्नां तप्तां पूरीषकर्दमाम्।
सङ्कीर्णां पापिभिश्चापि क्रन्दमानैरितस्ततः॥२५॥
असिपत्रवनं चैव तथा सन्तप्तबालुकम्।
रौरवं च महाघोरं योजनत्रयविस्तृतम्॥२६॥
सन्तप्यमानं तीक्ष्णेन वह्निना च समन्ततः।
हाहारवशताकीर्णं महारौरवमेव च॥२७॥
योनिपुंसाख्यमपरं तामिस्त्रं च महार्त्तिदम्।
महातामिस्त्रकं चैव सम्भ्रमं च तथैव च॥२८॥

---

कोई त्रिशूल से और कोई अन्य प्रकार से मारे जा रहे थे। कुछ लोग भिन्न-भिन्न प्रकार से मारे जाने के कारण छिन्न-भिन्न अङ्ग वाले हो गये थे।।२३।।

वहाँ मुनि सोमशर्मा ने तपाये हुए लोहे के खम्भों में बाँधे जाते हुए पापियों को देखा। वहाँ पर उन्होंने वैतरणी नामक नदी को भी देखा, जो पीब, रक्त को प्रवाहित कर रही थी।।२४।।

उस वैतरणी नदी में अनेक प्रकार के कीड़े व्याप्त थे। उसमें तप्त पुरीष के पङ्क थे, चारों ओर आर्त्तध्वनि करते हुए पापियों से वह नदी व्याप्त थी।।२५।।

वहाँ सोमशर्मा ने तलवार के समान पत्र वाले वन को देखा, पुनः सन्तप्त बालु वाले वन का अवलोकन किया। तदनन्तर महान् भयङ्कर रौरव नरक को देखा, जो तीन योजन अर्थात् बारह कोश में विस्तृत था।।२६।।

वहाँ चारों ओर सन्दीप्त अग्नि से पापी जीव जलाये जा रहे थे। वहाँ महारौरव नरक था, जो हाहाकार के शब्द से व्याप्त था।।२७।।

वहाँ एक अन्य नरक योनिपुंस नाम वाला था, दूसरा अति पीड़ादायक तामिस्त्र नामक नरक था। वहीं पर महातामिस्त्र और सम्भ्रम नामक नरक भी था।।२८।।

अभेद्यकृमिसम्पूर्णं पुरीषभक्षणं तथा।
स्वमांसभक्षणं चैव कुम्भीपाकं च दृष्टवान्॥२९॥
एते चान्ये च बहवो यातनानरकास्तथा।
दृष्टास्तेन महाभाग लम्बमानास्तरुव्रजे॥३०॥
पश्यन् महातपा विप्रस्त्रस्तः पापान् समीक्ष्य वै।
ततो ब्रह्मपुरे विद्वन्नानाभोगपरिप्लुतः॥३१॥
क्षुत्तृष्णारहितस्तत्र दुःखेन रहितस्तथा।
भूर्लोकं च भुवर्लोकं स्वर्लोकं च महर्जनम्॥३२॥
तपःसत्ये च पातालमव्याहतगतिर्द्विजः।
यत्रेच्छति स वै गन्तुं तत्र तत्र विमानगः॥३३॥
जगामाऽप्सरोगन्धर्वकिन्नरैरुपशोभितः ।
एवं वर्षसहस्त्रं च भुक्त्वा दिव्यं च भोगकम्॥३४॥

---

वहाँ ऐसे भी नरक थे, जिसमें अभेद्य कीड़े भरे पड़े थे। जहाँ विष्ठा का भोजन करना पड़ता है, कहीं पापी अपने मांस को ही खा रहे थे। वहाँ उन्होंने कुम्भीपाक नामक नरक भी देखा।।२९।।

इस प्रकार उन्होंने वहाँ अनेक प्रकार की नरकयातनाओं का अवलोकन किया। हे महाभाग! उन्होंने वहाँ वृक्षों पर पापियों को लटकते हुए देखा।।३०।।

हे द्विजश्रेष्ठ! वहाँ पापियों की यातनाओं को देखता हुआ वह तपस्वी ब्राह्मण सोमशर्मा ब्रह्मलोक गया। वहाँ उसने अनेक प्रकार के भोगों को प्राप्त किया।।३१।।

वहाँ वह भूख और प्यास से रहित हो गया। उसे किसी प्रकार का दुःख नहीं था। पुनः वह भूर्लोक, भुवर्लोक, स्वर्लोक और महर्लोक गया।।३२।।

तदनन्तर तप:लोक, सत्यलोक, पाताललोक में भी बिना रुकावट के गया, इस प्रकार जहाँ-जहाँ जाने की इच्छा करता था, वह विमान से वहीं पर गमन करता था।।३३।।

वह अप्सरा, गन्धर्व और किन्नरों से उपशोभित लोकों में भी गया। इस प्रकार वह एक हजार वर्ष तक दिव्य भोगों का उपभोग करता रहा।।३४।।

पृथिव्यां च पुनर्जातो राजा परमधार्मिकः।
बुभुजे च ततो भोगान् राज्यप्राप्तान् महायशाः॥३५॥
इष्ट्वा बहुविधैर्यज्ञैः समाप्तवरदक्षिणैः।
पुनः स्वर्गं जगामाऽपि भुक्त्वा भोगांश्च शाश्वतान्॥३६॥
ततश्चन्द्रस्य बिम्बे च भूत्वा नीहाररूपधृक्।
स्रवते स्म तथौषध्यां जीवश्चन्द्रस्य मण्डलात्॥३७॥
एतस्मिन्नन्तरे काचिन्निषादवनिता ततः।
जाता ऋतुमती तत्र गर्भाधानपराऽभवत्॥३८॥
निषादेन तु यद् भुक्तं तत्र प्राप्तोऽमृतात्मकः।
निषाद्या योनियन्त्रे वै क्षिप्तो मैथुनकर्म्मणा।
रेतः सञ्चालितो जन्तुर्लिङ्गात्स्त्रीयोनिसञ्चितः॥३९॥
योनिरक्तेन संयुक्तो जरायुपरिवेष्टितः।
दिनेनैकेन कललं कठिनत्वमगात्ततः॥४०॥

---

इसके बाद वह पृथिवी पर परम धार्मिक राजा के रूप में उत्पन्न हुआ। वहाँ उसने राज्य प्राप्त कर महान् यश को अर्जित करता हुआ भोगों का उपभोग किया।।३५।।

वह अनेक प्रकार के यज्ञों का अनुष्ठान किया और उन यज्ञों को श्रेष्ठ दक्षिणा प्रदान करते हुए समाप्त करता था। फिर वह अनेक प्रकार के सनातन भोगों को भोग कर पुनः स्वर्गलोक में चला गया।।३६।।

तदनन्तर चन्द्रमण्डल में जाकर नीहार (पाले) का रूप धारण कर चन्द्रमा के मण्डल से औषधियों के मध्य में जीवनी शक्ति प्रदान करने लगा।।३७।।

इसी अवसर पर किसी निषाद की स्त्री ऋतुमयी हुई और वह गर्भाधान की इच्छा करने लगी।।३८।।

निषाद ने वहाँ जो भोजन किया था, वह औषधियों से अमृत बनकर प्राप्त हुआ। उसने उसे मैथुन कर्म के द्वारा निषादी के गर्भाशय में सञ्चित कर दिया।।३९।।

इस प्रकार वह गर्भाशय के रक्त से संयुक्त होकर जरायु से भी परिवेष्टित हो गया। वह एक दिन में कलल का रूप धारण करने के बाद कठोरता को प्राप्त हो गया।।४०।।

**बुद्बुदाकारतां प्राप्तः पञ्चरात्रेण स द्विजः।**
**ततः पेशित्वमापन्नो मांसस्य सप्तरात्रितः[१]।।४१।।**

**मासार्धेन मांसपेशी रुधिरेण परिप्लुतः।**
**कठिनत्वं तदाप्नोति पञ्चविंशतिरात्रिषु[२]।।४२।।**

**मासाच्छिरःसमुत्पत्तिर्ग्रीवास्कन्धौ तथोदरम्।**
**पृष्ठवंशस्तथोत्पन्नः पञ्चधाङ्गानि तत्क्रमात्।।४३।।**

**पाणिपादौ तथा पार्श्वौ कटिर्जानुद्वितीयकम्।**
**त्रिभिर्मासैः कराङ्गुल्यः सन्धयश्च महामुने।।४४।।**

**मासेन च चतुर्थेन सर्वाङ्गुल्यस्तपोनिधे।**
**नासिकाकर्णनेत्राणि पञ्चमे मासि संस्फुटम्।।४५।।**

**दन्तभूमिर्नखा गुह्यं जीवश्च जठरस्थितः।**
**अङ्गच्छिद्राणि षष्ठे च पायुर्मेढ्रं तथा मुने।।४६।।**

---

तदनन्तर वह ब्राह्मण सोमशर्मा पाँच दिन में बुद्बुद के आकार को प्राप्त हो गया। इसके बाद सात रात्रि में वह मांसपेशी के आकार को प्राप्त किया।।४१।।

पुनः आधे माह के बाद वह मांसपेशी रक्त से भर गयी। उसके बाद पच्चीस रात्रि में कठिनता को प्राप्त हो गयी।।४२।।

इस प्रकार मांसपेशी से ही शिर, ग्रीवा (गर्दन), स्कन्ध, उदर (पेट), पृष्ठ का भाग आदि उत्पन्न हो गये। इसी क्रम में पाँच प्रकार के अङ्गों की उत्पत्ति भी हो गयी।।४३।।

तदनन्तर हाथ, पैर, पार्श्वभाग, कटि (कमर) और दोनों जानु ये सब बन जाते हैं। हे महामुनि! तीसरे महीने में हाथ की अङ्गुलियाँ और समस्त सन्धि (जोड़) बन जाती है।।४४।।

हे तपोनिधि! चौथे महीने में समस्त अङ्गुलियाँ बन जाती हैं। नासिका, कर्ण, नेत्र ये सब पञ्चम मास में स्फुट हो जाते हैं।।४५।।

इस समय तक गर्भाशय में स्थित जीव में दाँत के स्थान और नाखून भी हो जाते हैं। हे मुनि! षष्ठ मास में अङ्गों के छिद्र, गुदा और शिश्न ये सब बन जाते हैं।।४६।।

---

१. 'सप्तरात्रतः' इति ख.। २. 'पञ्चविंशतिरात्रितः' इति ख.।

**नाभिश्च सप्तमे मासि जातास्तस्य महामते।**
**लोमानि च महाभाग शीर्षकेशास्तथोद्गताः॥४७॥**
**विभिन्नावयवत्वं च सर्वं जातं तथाष्टमे।**
**ववृधे जठरे जन्तुः संस्मरन् पूर्वकर्म तत्॥४८॥**
**नाना जन्मानि जातानि तथा चोच्चावचानि च।**
**जठराग्निसमुद्विग्नः कति वारं स्वजन्मसु॥४९॥**
**स्वकर्मणा कर्महीनो जातोऽहं देहदुःखभाक्।**
**न मे मृत्युः कर्मसूत्रान्निबद्धस्यापि पीडतः॥५०॥**
**नानायोनिसहस्राणि ह्यनुभूतानि वै मया।**
**मातापितृसहस्राणि पुत्रदारास्तथैव च॥५१॥**
**कुटुम्बभरणासक्तिर्जाता च मम सर्वदा।**
**सत्कर्म न कृतं येन जातो मुक्तिविवर्जितः॥५२॥**

---

हे महामति! सप्तम मास में उस जीव के नाभि बनती है। हे महाभाग! उसी मास में लोम एवं शिर के बाल भी उत्पन्न हो जाते हैं।।४७।।

इसके पश्चात् अष्टम मास में भिन्न-भिन्न सभी अङ्ग परिलक्षित होने लगते हैं। उस समय उदर (गर्भ) में स्थित जीव अपने पूर्व जन्म के कर्मों का स्मरण करता है।।४८।।

जीव स्मरण करता है कि इसके पूर्व ऊँच-नीच जाति में मेरे अनेक जन्म हुए हैं। इसी कारण अपने जन्म के समय में न जाने कितनी बार जठराग्नि के द्वारा पीड़ित हुआ हूँ।।४९।।

अपने ही कर्म से अच्छे कर्म से रहित होने के कारण पुनः मुझे शरीर धारण करने का दुःख भोगना पड़ा है, कर्म-सूत्र के बन्धन में निबद्ध होने के कारण मैं अत्यन्त पीड़ित हूँ। मेरी मृत्यु अर्थात् दुःखों से मुक्ति नहीं हो रही है।।५०।।

मैंने अनेक प्रकार की सहस्रों योनियों का उपभोग किया है। इसी प्रकार मेरे सहस्रों माता-पिता और हजारों स्त्री-पुत्र आदि भी हुए हैं।।५१।।

सभी जन्मों में कुटुम्ब के पालन-पोषण की आसक्ति मुझमें बनी रही; किन्तु मैंने कोई अच्छा कार्य नहीं किया, जिस कारण से मैं मुक्ति से अलग ही रहा, अर्थात् मुक्ति न मिल पायी।।५२।।

न जाने पातकं तद्वै येन जातोऽस्मि गर्भगः।
स्त्रीशरीरो भाग्यहीनो निषादीगर्भमागतः॥५३॥
जातं मे दर्शनं विष्णोस्तपस्तप्तं च मे महत्।
केन कर्मविपाकेन निषादीगर्भसंस्थितः॥५४॥
किं करोमि क्व गच्छामि पीड्यमानोऽग्निना मुहुः।
भक्ष्याभक्ष्यविधिश्चैव न स्थिरो मम साम्प्रतम्॥५५॥
अत ऊर्ध्वं कदाचिद्धि भविष्यति गतिर्बहिः।
कर्तव्या मे विष्णुचिन्ता गर्भवासो यतो न हि॥५६॥
इति वै चिन्तयोद्विग्नः स वै ब्राह्मणसत्तमः।
दशमे मासि योनेस्तु कुर्वन् मातुः प्रपीडनम्॥५७॥
पीड्यमानः स्वयं चैव नरकात्पातकी यथा[१]।
निर्गतस्तु स्वरूपेण स्पृष्टः संसारवायुना॥५८॥

वह गर्भस्थ सोमशर्मा सोचता है कि मैं उस पाप को नहीं जानता, जिससे मुझे गर्भ में आना पड़ा है। मैं भाग्यहीन स्त्री का शरीर धारण कर दु:खित होकर गर्भ में उपस्थित हो रहा हूँ।।५३।।

मुझे भगवान् विष्णु का दर्शन हुआ था, मैंने महान् तप का अनुष्ठान किया था, फिर भी किस कर्म के परिणामस्वरूप मैं निषाद की पत्नी के गर्भ में प्राप्त हुआ हूँ।।५४।।

हाय! मैं बारम्बार जठराग्नि से पीड़ित हो रहा हूँ। इस समय मैं क्या करूँ, कहाँ जाऊँ? सम्प्रति मेरी भक्ष्य और अभक्ष्य की विधि भी निश्चित नहीं है।।५५।।

यदि अब मेरा गर्भ के बाहर निकास होता है, तो मैं अवश्य भगवान् विष्णु का निदिध्यासन करूँगा, जिससे कि पुनः मेरा गर्भ में निवास न हो।।५६।।

इस प्रकार की चिन्ता से वह ब्राह्मणश्रेष्ठ सोमशर्मा उद्विग्न हो गया, तदनन्तर दशम मास प्राप्त होने पर माता के गर्भाशय को पीड़ित करने लगा।।५७।।

स्वयं भी पीड़ित होता हुआ वह जीव इस प्रकार बाहर निकला, जैसे पापी जीव नरक से बाहर निकलता है। बाहर निकलते ही सांसारिक वायु ने उसका स्पर्श किया।।५८।।

१. पातकीऽऽयथेति ग.।

जायमाना तु सा कन्या रुरोद क्षुधयाऽऽवृता।
अजानती महामायां वैष्णवीं विष्णुतत्परा॥५९॥
विण्मूत्रपरिक्लिन्नाङ्गी स्तनपानपरायणा।
वक्तुं किमपि नो शक्ता न गन्तुं च क्वचिन्मुने॥६०॥
एवं बाल्येऽपि दुःखानि ह्यनुभूतानि चैतया।
क्रमेण यौवनाक्रान्ता जाता नैषादकन्यका[1]॥६१॥
पित्रा दत्ताऽपि कस्मैचिन्निषादाय महामते।
तत्रापि पुत्रभृत्यादिसंयुताऽऽसीत्क्रमेण सा॥६२॥
एवं जातानि पञ्चाशद्वर्षाणि द्विजपुङ्गव।
एकदा सा नदीतीरे गता स्नातुं महामते॥६३॥
यावत्स्नाति महाशूद्रा तावत्कच्छपमूर्त्तिना।
कालेन सङ्ग्रहीता सा पुनर्जातो यथा पुरा॥६४॥

---

कन्या के रूप में उत्पन्न होते ही क्षुधा से व्याकुल होकर वह जीव रोदन करने लगा। विष्णु भगवान् में तत्पर रहने पर भी वह वैष्णवी माया के विषय में कुछ भी नहीं जान सका।।५९।।

अब वह कन्या विष्ठा और मूत्र से भींगी हुई स्तनपान करने लगी। हे मुनि! वह कुछ कहने में समर्थ नहीं थी, न वह कहीं जा सकती थी।।६०।।

इस प्रकार बाल्यावस्था में भी दु:खों का अनुभव करती रही। पुन: क्रमश: वह निषाद की कन्या युवावस्था को प्राप्त हो गयी।।६१।।

हे महामति! तदनन्तर उसके पिता ने किसी निषाद को उसे दान कर दिया। वहाँ भी वह युवती पुत्र तथा भृत्य आदि से युक्त हो गयी।।६२।।

हे द्विजश्रेष्ठ! इसी क्रम में उसके पच्चास वर्ष व्यतीत हो गये। हे महामति! एक समय वह स्नान करने के लिए नदी के तट पर गयी।।६३।।

जैसे ही वह महाशूद्रा स्नान करने लगी, उसी समय काल ने कच्छप रूप होकर उसे पकड़ लिया। वह कन्या रूप को छोड़कर फिर वैसा ही हो गया, जैसा पहले उसका ब्राह्मण का रूप था।।६४।।

---

१. नैषदिकन्यकेति ख.।

स्नातः समागतो यद्वत्त्रिदण्डी दण्डकुण्डिकाम्।
गृहीत्वा वाससी तद्वत्पश्यतां वै तपस्यताम्॥६५॥
एतस्मिन्नेव काले तु निषादः क्रोधमूर्च्छितः।
महायष्टिं गृहीत्वा तु तामन्वेष्टुं समाययौ॥६६॥
अन्वेषमाणः सततं तीरे तीरे विशेषतः।
वनानां चैव कुञ्जेषु वप्रेषु तटवीचिषु॥६७॥
एवमन्विष्यतस्तस्य निषादस्य महामते।
दिनं सर्वं क्षयं जातं प्राप्ता चैव तु शर्वरी॥६८॥
विललाप ततोऽरण्ये गङ्गातीरे समाश्रितः।
हा प्रिये क्व गतासि त्वं त्यक्त्वा मां पुत्रदारिकाः॥६९॥
किं करोमि क्व गच्छामि कथं जीवेयुरर्भकाः।
का मां प्रिये चिन्तयानं शयानं शयने स्थिता॥
मधुरालापप्रश्नैश्च तूर्णमाश्वासयिष्यति॥७०॥

---

स्नान कर त्रिदण्ड, कुण्डी एवं वस्त्रों को लेकर तपस्वियों के देखते-देखते वह फिर लौट आया।।६५।।

इसी समय उसका पति निषाद क्रोध से मूर्च्छित होता हुआ बड़े दण्डे को लेकर उसको खोजने के लिए चल पड़ा।।६६।।

वह निषाद सर्वत्र विशेषकर प्रत्येक घाट पर उसका अन्वेषण करने लगा। वह वनों की कुञ्जों में, पहाड़ी टीलों पर, तट की वीचियों में खोजता रहा।।६७।।

हे महामति! इस प्रकार अन्वेषण करते हुए उस निषाद का सारा दिन तो व्यतीत हो ही गया और रात भी हो गयी।।६८।।

तब वह वन के मध्य में गङ्गा के तट पर बैठकर विलाप करने लगा। हाय प्रिये! तुम मुझको तथा इन पुत्र और पुत्रियों को छोड़कर कहाँ चली गयी।।६९।।

हाय! मैं क्या करूँ, कहाँ जाऊँ? मेरे बच्चे कैसे जीवित रहेंगे? हे प्रिये! जब मैं चिन्तातुर होकर पलङ्ग पर लेटूँगा, उस समय शय्या पर बैठकर मीठी-मीठी बातों से पूछकर मुझे कौन आश्वासन देगी।।७०।।

**स्तनन्धयश्च स कथं भविष्यति दिनात्यये।**
**मातर्मातः पुनर्मातरित्युक्त्वाऽश्रुपरिप्लुतः॥७१॥**
**रोदयिष्यति मां चैव तथान्याञ्जातिबान्धवान्।**
**कच्चित्त्वं परिहासाय लीलापुलिनसंस्तरे॥७२॥**
**कच्चिन्मम प्रेम द्रष्टुं स्थिता कुञ्जेऽतिवेश्मनि।**
**कच्चित्त्वां व्याघ्रसर्पाद्या चक्रुरसुविवर्जिताम्॥७३॥**
**कच्चित्त्वं गह्वरे तन्वि गता नीता च राक्षसैः।**
**इति लालप्यमाने तु तत्र तस्मिन्निषादजे॥७४॥**
**मुमोह माययाऽऽविष्टो दृष्ट्वा तं तादृशं मुने।**
**उवाच वचनं दीनो वाष्पकण्ठः सगद्गदम्॥७५॥**
**मा रोदीस्त्वं निषादेश कालो वै दुरतिक्रमः।**
**अप्रमादेन स्थातव्यं शत्रुमित्रेषु सर्वदा॥७६॥**
**इति सर्वं वचः श्रुत्वा वाष्पगद्गदया गिरा।**
**उवाच सहसाऽऽगत्य तत्र ब्राह्मणसन्निधौ॥७७॥**

---

वे दुधमुहे बालक दिन के बीतने पर कैसे रहेंगे। वे हे माता, हे माता, इस प्रकार बोलते हुए आँसुओं से भर जायेंगे।।७१।।

तब वे मुझको एवं अन्य बन्धु-बान्धवों को भी रुला देंगे। क्या तुम परिहास में कहीं नदी के किनारे पर चली गयी हो।।७२।।

अथवा मेरे प्रेम की परीक्षा लेने के लिए कुञ्जगृह में चली गयी हो। अथवा व्याघ्र, सर्प आदि किसी हिंसक जीव ने तुम्हारे प्राण हरण कर लिये हैं।।७३।।

हे तन्वि! क्या तुम किसी गुफा में गयी थी, वहाँ तुम्हें राक्षसों ने पकड़ लिया है। इस प्रकार वहाँ वह निषाद बार-बार विलाप करता रहा।।७४।।

हे मुनि! उस निषाद को इस प्रकार विलाप करते हुए देखकर वह ब्राह्मण भी मोहित हो गया। तदनन्तर वाष्प से उसका कण्ठ अवरुद्ध हो गया, अतः गद्गद स्वर से इस प्रकार दीन वचन बोला।।७५।।

हे निषादराज! तुम इस प्रकार मत रोओ, क्योंकि काल की गति को कोई पार नहीं कर सकता है। इसलिए आलस्यरहित होकर शत्रु और मित्रों के बीच सर्वदा व्यवहार करना चाहिए।।७६।।

वह निषाद ब्राह्मण के इस वचन को सुनकर वहाँ उसके समीप आया। उसने ब्राह्मण के समक्ष वाष्प से गद्गद वाणी से कहा।।७७।।

भो भो द्विजवरश्रेष्ठ क्व गता सा मम प्रिया।
तया विना क्षणमपि न जीवेयं सुदुःखितः॥७८॥
कयाऽत्र वनकुञ्जेषु नदीनां सङ्गमेषु च।
वहन् कुटजवातेषु पर्वतानां च मूर्द्धसु॥७९॥
तमालमालाजालेषु कूजितेषु च कोकिलैः।
रमयिष्यामि विप्रेश तथा विपिनपङ्क्तिषु॥८०॥
कथयस्व महाभाग क्व गता सा प्रियंवदा।
प्राणदो भव मे सौम्य रक्षस्व मम बालकान्॥८१॥
इतीरितं तस्य वचो निशम्य वै निषादपुत्रस्य विमोहितो द्विजः।
सवाष्पकण्ठोद्गतमन्दवाक्यो जगाद भूयो जगदीशमोहितः॥८२॥
अहं तव स्त्री भवनाधिवासिनी स्थिता निषादेश्वर गच्छ मन्दिरम्।
एतावदेवाभवदस्ति नो तव सम्बन्धकः कर्मगतानुसारिकः॥८३॥

---

हे द्विजश्रेष्ठ! वह मेरी प्रिया कहाँ चली गयी। उसके बिना अत्यन्त दुःखित होता हुआ मैं एक क्षण भी जीवित नहीं रह सकता हूँ।।७८।।

यहाँ वन की कुञ्जों में, नदियों के सङ्गम में, हिलते हुए कुटज वृक्षों के पवनों में, पर्वतों के शिखरों पर किसके साथ रमण करूँगा।।७९।।

हे विप्रेश! तमाल वृक्षों की श्रेणियों में, कोकिलों के द्वारा कूजन करते रहने पर वनों की पंक्तियों में मैं किसके साथ विहार करूँगा।।८०।।

हे महाभाग! आप बतलायें, प्रियभाषिणी वह कहाँ चली गयी। हे सौम्य! आप मेरे प्राणों के दाता बनें तथा मेरे बालकों की रक्षा करें।।८१।।

उस निषादकुमार के इस प्रकार के कहे गये वचन को सुनकर वह ब्राह्मण मोहित हो गया। अत एव उसका कण्ठ आँसू के निकलने से रुद्ध हो गया और उसकी वाणी लड़खड़ाने लगी। इस प्रकार जगदीश्वर की माया से मोहित होकर बोला।।८२।।

हे निषादेश्वर! तुम्हारे भवनों में अधिकारपूर्वक निवास करने वाली स्त्री मैं ही था। अब तुम अपने भवन को जाओ। कर्मों की गति के अनुसार तुम्हारे साथ हमारा इतने ही दिनों का सम्बन्ध था।।८३।।

रक्षस्व चेमानतिबालकान् मे त्वमेव तेषां जननी पिता च।
कनिष्ठको यः सततं हि रक्ष्यो गच्छस्व गेहं वचनं कुरुष्व॥८४॥
एवं लुब्धं वाक्यमुक्त्वा द्विजस्तु रुरोदोच्चैस्तेन साकं मुनीश[1]।
विष्णोर्मायासंवशो ह्यस्वतन्त्रो हाहेत्युक्त्वा पातयामास वाष्पान्॥८५॥
व्याधोऽपि तत्राशु तदीयबालानानाययामास विमोहनार्थकम्।
रुरोद पादे पतितो जगाद भूयश्च देवेशविमोहितः परम्॥८६॥

एते वै बालका मह्यं मोहयन्तितरां मुने।
गच्छ मे मन्दिरं शीघ्रं त्वां मत्वा मातरं तथा॥८७॥
जीविष्यन्ति तथाऽहं च रक्ष नो म्रियमाणकान्।
रक्षा त्वया प्रकर्तव्या गृहे त्वया यथा वनात्॥८८॥
आनेया मृगपक्ष्याद्या भक्षणार्थं यथा पुरा।
तवैव[2] सर्वं भवनं बालकाश्च धनं तथा॥८९॥

---

अब तुम ही हमारे इन बालकों की रक्षा करो; क्योंकि तुम ही इनके माता-पिता हो, हमारा वचन मानकर घर जाओ और जो सबसे छोटा है, उसकी रक्षा पूर्ण रूप से करो।।८४।।

हे मुनीश! मोहग्रस्त उस निषाद से इस प्रकार कहकर वह ब्राह्मण भी उच्च स्वर से रोदन करने लगा। भगवान् विष्णु की माया के वशीभूत होकर वह ब्राह्मण अपने अधीन न रह सका, अत एव हाहाकार के शब्दों का उच्चारण करते हुए आँसू बहाने लगा।।८५।।

इतने में ही वह व्याध मोह के कारण उसके बालकों को वहाँ ले आया। फिर मोहित होकर उसके चरणों में गिर कर रोदन करने लगा। तत्पश्चात् देवेश की माया से विमोहित होकर बोला।।८६।।

हे मुनि! ये बालक मुझे मोहित कर रहे हैं, ये सब तुम्हें अपनी माता समझ रहे हैं, इसलिए हमारे घर चलो। ऐसा करने से ये सब जीवित हो जायेंगे। अब तुम मरणासन्न हम लोगों की रक्षा करो। अब तुम्हें वन से घर जाकर हमारी रक्षा करनी चाहिए। जिस प्रकार पहले वन से पशु-पक्षियों को लाया करती थी, उसी प्रकार हम लोगों के खाने के लिए उन्हें लाना चाहिए। वह भवन, वे बालक, वह धन सब कुछ पहले की भाँति तुम्हारा ही है।।८७-८९।।

---

१. मुनीशेति प्रथमान्तप्रयोगः-ग.। २. तदैवेति ग.।

इति श्रुत्वा वचो विप्र निषादस्य नदीतटे।
चकार मनसो भावं गेहे गन्तुं त्वरान्वितः॥९०॥
एतस्मिन्नन्तरे तत्र न व्याधो न च बालकाः।
ददर्श दण्डं कुण्डीं च धौतं पात्रं स्थितं तदा॥९१॥
दृष्ट्वा तन्महदाश्चर्यं हरिमायावशो द्विजः।
किमेतद्धि किमेतद्धि चकितोऽभून्महामते॥९२॥
स्मृत्वा तन्मरणं चैव नरकाणां च दर्शनम्।
गर्भवासं च नैषाद्यास्तथा वै स्त्रीस्वरूपताम्॥९३॥
तत्र मायां च पुत्रेषु धनेषु च तथा पतौ।
परमं खेदमापन्नो दुरात्माऽहं भृशं खलः॥९४॥
यस्य मे तादृशी जाता गतिर्विष्णोस्तु चिन्तनात्।
अभक्ष्यं भक्षितं चैवाऽपेयं पीतं च वै मया॥९५॥
अगम्यागमनं चैव कृतं यद्वै दुरात्मना।
भवित्री का गतिर्मे हि कृतपापस्य सर्वदा॥९६॥

---

जब ब्राह्मण ने नदी के तट पर निषाद का इस प्रकार वचन सुना, तब उसके चित्त में शीघ्र ही घर जाने का भाव उदित हो गया।।९०।।

इसी बीच वहाँ न तो वह व्याध ही रहा और न बालक ही रहे। केवल उसने दण्ड, कुण्डी, धोती और पात्रों को रखा हुआ देखा।।९१।।

हे महामति! हरि की माया के वशीभूत वह ब्राह्मण यह देखकर महान् आश्चर्यचकित हुआ। यह क्या हो गया है? यह क्या हो गया है? इस प्रकार वह चकित हो गया।।९२।।

तदनन्तर उन सभी मरण, नरकों का दर्शन, निषादपत्नी के गर्भ में निवास, स्त्रीरूप की प्राप्ति का स्मरण करने लगा।।९३।।

वहाँ पुत्र, धन और पति में माया आदि का स्मरण करने से उसे अतीव खेद की प्राप्ति हुई और वह कहने लगा कि मैं अत्यन्त ही दुष्ट एवं दुराचारी हूँ।।९४।।

भगवान् विष्णु की माया का चिन्तन करने से मेरी यह दशा हुई है, मैंने उस समय अभक्ष्य का भक्षण किया और अपेय का पान किया।।९५।।

दुराचारी मैंने अगम्या स्त्रियों के साथ गमन किया, हाय सर्वदा दुष्ट आचरण करने वाले मुझ पापी की क्या गति होगी।।९६।।

पापादस्मात्कथं मेऽद्य निष्कृतिर्भविता तथा।
तपश्चर्या कृता पूर्वं प्राप्तं दुःखमनन्तकम्॥९७॥
का भविष्यति पापैर्हि परत्र च गतिर्मम।
इति तच्चिन्तयानस्य द्विजस्य नरपुङ्गव॥९८॥
भक्तानुकम्पी भगवान् प्रत्यक्षं निजगाद ह।
शङ्खचक्रगदापद्मधरैर्बाहुभिरन्वितः॥९९॥
पीताम्बरलसत्कान्तिर्वनमालाविभूषितः।
श्रीवत्सवक्षास्तेजस्वी नवनीरदरूपधृक्॥१००॥
अनन्तमणिमुक्ताभिर्ललितं मुकुटं तथा।
धारयन् वै त्रिलोकीशो रमया सहितः प्रभुः॥१०१॥
रुदन्तं तं समासीनमधोवक्त्रं विमोहितम्।
उत्तिष्ठोत्तिष्ठ भद्रं ते तपोराशे महामते॥१०२॥

---

मैं यह नहीं जानता कि इस पाप से मेरा उद्धार किस प्रकार होगा। मैंने पहले तपश्चर्या भी की और मुझे अनन्त दुःख की प्राप्ति भी हुई।।९७।।

इन पापकर्मों के आचरण करने से परलोक में मेरी क्या गति होगी? हे नरश्रेष्ठ! वह द्विज इस प्रकार चिन्ता करने लगा।।९८।।

उसी समय भक्तों के ऊपर अनुग्रह करने वाले भगवान् उसके सामने प्रत्यक्ष होकर इस प्रकार बोले। उस समय भगवान् शङ्ख, चक्र, गदा और पद्म धारण किये हुए चार भुजाओं से युक्त थे।।९९।।

पीताम्बर से उनकी कान्ति सुशोभित हो रही थी। भगवान् वनमाला से समलङ्कृत थे। उन तेजस्वी के वक्षस्थल पर श्रीवत्स का चिह्न विराजमान था। भगवान् अभिनव जलद (बादल) के सदृश नील रूप धारण कर रहे थे।।१००।।

अनेक प्रकार की मणियों तथा मुक्ताओं से उनका मुकुट चमक रहा था। ऐसे त्रिलोकी के स्वामी, लक्ष्मी के साथ प्रभु वहाँ विराजमान थे।।१०१।।

इस प्रकार प्रभु ने रोदन करते हुए नीचे मुख कर बैठे हुए अज्ञानाक्रान्त उस ब्राह्मण से कहा—हे महामतिमान् तपोराशि! उठो, तुम्हारा कल्याण हो।।१०२।।

त्वत्समो नास्ति त्रैलोक्ये मद्भक्तो विजितेन्द्रियः।
धन्योऽसि कृतकृत्योऽसि न ते दुर्गतिरस्ति हि॥१०३॥
न त्वया भक्षितं किञ्चिन्न पीतं न कृतं तथा।
न तेऽभून्मरणं विप्र यातना नारकी न हि॥१०४॥
न ते [१]भूत्स्वर्गवासश्च न राज्याप्तिर्न वै मृतिः।
न तेऽभूद् गर्भवासश्च न ते जाठरवेदना॥१०५॥
न ते स्त्रीत्वस्य सम्प्राप्तिर्न निषादगृहे जनिः।
न विवाहो न पुत्राद्या नैतत्सर्वं प्रपञ्चितम्॥१०६॥
यत्त्वया याचितं भद्र तपश्चर्याफलं पुरा।
सेयं माया मया विप्र दर्शिता प्रियलिप्सुना॥१०७॥
एतयैव परं मूढो न जानाति परायणम्।
त्वं तया मोहितो विप्र दृष्टवानिदमद्भुतम्॥१०८॥

तुम्हारे समान जितेन्द्रिय हमारा भक्त इस त्रिलोकी में कोई अन्य नहीं है। तुम धन्य हो, तुमने अपने कर्तव्यों का आचरण कर लिया, तुम्हारी दुर्गति कदापि नहीं होगी।।१०३।।

तुमने न तो कुछ अभक्ष्य का भक्षण किया है, न हि अपेय का पान किया है और न तुमने कोई अकर्तव्य कर्म ही किया है। हे विप्र! तुम्हारा मरण भी नहीं हुआ है और न तुमने किसी नरक की यातना का भोग किया है।।१०४।।

तुम्हें स्वर्ग का निवास और गर्भवास का दुःख भी नहीं प्राप्त हुआ है। न तुम्हें किसी राज्य की प्राप्ति हुई है और न मृत्यु की प्राप्ति हुई है।।१०५।।

न तुम्हें स्त्री का स्वरूप धारण हुआ है और न तुम्हारा जन्म ही निषाद के घर में हुआ है। न तुम्हारा विवाह हुआ और न तुम्हारे पुत्र आदि ही हुए। यह सब मायाजनित प्रपञ्च था।।१०६।।

हे कल्याणमूर्ति! तुमने पहले जो अपनी तपश्चर्या के फल की याचना की थी, उसी अपनी माया को हमने तुम्हें दिखलाया है, क्योंकि मैं तुम्हारा प्रिय करने की इच्छा करता हूँ।।१०७।।

मूर्खजन हमारी इसी माया को नहीं जान सकते हैं। हे विप्र! उसी माया से मोहित होकर तुमने इस अद्भुत माया का अवलोकन किया है।।१०८।।

१. भू इति ग.।

स्वावज्ञा न च ते कार्या मायारूपमिदं जगत्।
स्वभाव एष मायायाः प्रपञ्चः सार्वकालिकः॥१०९॥
अनात्मनि शरीरादावात्मबुद्धिर्हि या मता।
तया सम्मोह्यते सर्वं जगदेतच्चराचरम्॥११०॥
परमात्मनो न जन्मापि मरणं न च वेदना।
न वृद्धिर्न च वै ह्रासो न बाल्यं न च यौवनम्॥१११॥
न वा वार्द्धक्यभावोऽस्ति नित्यस्य परमात्मनः।
मम चेष्टास्वरूपस्य स्वभावोऽयं प्रवर्त्तते॥११२॥
संसारमूलभूता सा माया मे द्विजपुङ्गव।
शक्यते सा यदि त्यक्तुं प्रसादेन मम प्रभो॥११३॥
तदा तरति संसारं नानादुःखमयं चलम्।
अतः परं महाभाग मे माया सा दुरत्यया॥११४॥

---

इसलिये तुम्हें अपनी अवज्ञा नहीं करनी चाहिए; क्योंकि यह सम्पूर्ण जगत् मायारूप ही है। सभी कालों में प्रपञ्च की रचना करना माया का स्वभाव ही है।।१०९।।

जो अपना नहीं है, ऐसे शरीर आदि में जो आत्मबुद्धि मान रखी है, यह मायाजनित अज्ञान है। उसी माया से चराचर सम्पूर्ण जगत् मोहित है।।११०।।

परमात्मा का न जन्म होता है, न मरण होता है और न किसी प्रकार की पीड़ा ही होती है। उनकी वृद्धि और ह्रास भी नहीं होते हैं। उनकी बाल्यावस्था अथवा युवावस्था भी नहीं आती है।।१११।।

परमात्मा नित्य हैं, इसलिए उनको कभी वार्द्धक्यभाव की भी प्राप्ति नहीं होती है, यह सब कुछ हमारी चेष्टा के प्रभाव से ही प्रवृत्त होता है।।११२।।

हे द्विजश्रेष्ठ! यही हमारी माया संसार का मूल कारण है। हमारी कृपा से ही कोई व्यक्ति उस माया का परित्याग कर सकता है।।११३।।

हमारी कृपा से ही अनेक दुःखों से व्याप्त एवं चल अर्थात् नाशवान् इस संसार से पार पा सकता है। हे महाभाग! मेरी कृपा के बिना यह माया अत्यन्त दुःख से पार करने योग्य है।।११४।।

## मायाक्षेत्रस्याभिधाने रहस्यकथनम्

व्यापयिष्यति त्वां नैव यथा संसृज्यते जगत्।
इदं च परमं स्थानं संसारातपनाशनम्॥११५॥
माया ते दर्शिता यद्वै ततो मायाभिधन्त्विदम्।
तीर्थं पापवनाग्निर्वै सद्यः शुद्धिकरं स्मृतम्॥११६॥
ये नराः पिण्डदानं हि करिष्यन्ति महाशयाः।
तेषां गयाश्राद्धशतैः किं कर्तव्यं कृतैस्तथा॥११७॥
दानमत्र कुरुक्षेत्रवृद्धितोऽष्टगुणं तथा।
मायाकुण्डे तथा स्नानं कोटिकोटिगुणं भवेत्॥११८॥
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम्।
सर्वं कोटिस्तथा कोटी भविष्यन्ति न संशयः॥११९॥
मायाकुण्डमिदं मायाक्षेत्रे श्रेष्ठतमं स्मृतम्॥१२०॥

---

### मायाक्षेत्र के अभिधान का रहस्य

अब इसके आगे हमारी मोहिनी माया, जो सम्पूर्ण संसार की रचना करती है, अब तुम्हें व्याप्त नहीं होगी। यह परम स्थान सांसारिक सन्तापों का विनाश करने वाला है।।११५।।

इस स्थान पर हमने तुम्हें अपनी माया दिखलायी है, इसलिए इसका भी नाम माया-क्षेत्र होगा। यह तीर्थ पापरूपी वन को जलाने के लिए अग्नि के समान है तथा शीघ्र ही मन को शुद्ध कर देने वाला है।।११६।।

जो महाशय मनुष्य इस तीर्थ में पिण्डदान करेंगे, उन्हें सैकड़ों गयाश्राद्ध करने से भी कोई लाभ नहीं है।।११७।।

कुरुक्षेत्र में दान करने से जो कुछ फल उपलब्ध होता है, उससे आठ गुणा अधिक फल इस स्थान में दान करने से होता है। मायाकुण्ड में स्नान करने से कोटिगुण अधिक फल होता है।।११८।।

इस तीर्थ में स्नान, दान, जप, होम, स्वाध्याय और पितृतर्पण जो कुछ भी किया जाय, सभी करोड़ गुणा अधिक फल देने वाला होता है।।११९।।

मायाक्षेत्र में इस मायाकुण्ड का कीर्तन बहुत अधिक किया गया है।।१२०।।

स्कन्द उवाच

इत्युदीर्य स भगवान् महाविष्णुर्महामते।
अन्तर्दधौ ब्राह्मणस्य पश्यतः सोमशर्म्मणः॥१२१॥
आश्चर्यं परमं लेभे सोमशर्मा द्विजोत्तमः।
तत्रैव संस्थितो विप्रो दृष्टवान् मुनिपुङ्गवान्॥१२२॥
स्नातुं समागतास्ते चाऽपृच्छंस्तं महदाशयाः।
किं कृता शीघ्रता विप्र मज्जने चाघमर्षणे॥१२३॥
इति तेषां च वचनं श्रुत्वा मायाबलं च तत्।
न मुमोह महाभाग कृपया जगदीशितुः॥१२४॥
सोऽपि कालेन केनापि सायुज्यं प्राप्तवान् परम्।
इति ते कथितं विप्र मायातीर्थस्य वैभवम्॥१२५॥

---

**स्कन्द जी ने कहा**

हे मतिमान्! इसके अनन्तर भगवान् महाविष्णु सोमशर्मा ब्राह्मण के देखते-देखते ही अन्तर्धान हो गये।।१२१।।

तब तो द्विजश्रेष्ठ सोमशर्मा परम आश्चर्य को प्राप्त हुए और वहाँ बैठे-बैठे ही उन्होंने उत्तमोत्तम मुनियों का अवलोकन किया।।१२२।।

वे महान् आशय वाले मुनि स्नान करने के लिए वहाँ आये थे। उन लोगों ने उनसे पूछा—हे विप्र! आप ने स्नान और अघमर्षण कर्म में इतनी शीघ्रता क्यों की?।।१२३।।

उनके इस प्रकार के वचन को सुनकर माया के बल से वह ब्राह्मण जगदीश्वर की माया के वशीभूत होने के कारण उनके वचनों से मोहित नहीं हुआ।।१२४।।

इस प्रकार कुछ काल के पश्चात् उसने भगवान् की सायुज्य मुक्ति प्राप्त की। हे विप्र! इस प्रकार हमने मायाक्षेत्र का माहात्म्य तुम्हारे प्रति वर्णन किया है।।१२५।।

श्रुत्वा यत्सर्वमायाभ्यो लिप्यते न हि मायया।
इदं स्थानं परं गोप्यं भवमुक्तिकरं ध्रुवम्॥१२६॥

**।। इति श्रीस्कान्दे केदारखण्डे मायाक्षेत्रमाहात्म्ये कुब्जाम्रके सोमशर्मोपाख्यानं नामाष्टादशाधिकशततमोऽध्यायः ।।११८।।**

---

इसके माहात्म्य को सुनकर मनुष्य सम्पूर्ण माया से दूर रहकर माया से लिप्त नहीं होता है। यह तीर्थस्थान परम गोपनीय है; क्योंकि यह भवबन्धन से मुक्त करने वाला है।।१२६।।

**।। इस प्रकार श्रीस्कन्दमहापुराण के अन्तर्गत केदारखण्ड में मायाक्षेत्र का माहात्म्यवर्णन नामक एक सौ अट्ठारह अध्याय पूर्ण हुआ।।११८।।**

**[श्लोकसंख्या पूर्वागत-७१२+१२६=८३८]**



# अथैकोनविंशत्यधिकशततमोऽध्यायः

## कौमुदतीर्थस्य माहात्म्यम्

स्कन्द उवाच

अथान्यत्सम्प्रवक्ष्यामि तीर्थं परमपावनम्।
तस्मादूर्ध्वप्रदेशे हि धनुषां पञ्चविंशतौ॥१॥
कौमुदं नाम तत्तीर्थं त्रिषु लोकेषु दुर्लभम्।
यत्र स्नात्वा नरो विप्र सोमलोके महीयते॥२॥
कार्तिके च तथा राधे माघे मार्गशिरे तथा।
स्नानं कुर्वन्ति येऽप्यत्र ज्ञानादज्ञानतोऽपि वा॥३॥
प्राप्नुवन्ति परं स्थानं यत्र गत्वा न शोचति।
यदि कश्चिद्भाग्यवशात् प्राणाँस्त्यजति तत्र वै॥४॥
पुमान् वा यदि वा षण्ढो नारी वा पापसंयुता।
स याति परमाँल्लोकान् पुनरावृत्तिदुर्लभान्॥५॥

---

### कौमुदतीर्थ का माहात्म्य

**स्कन्द जी ने कहा**

इसके बाद अब हम एक अन्य परम पवित्र तीर्थ का वर्णन करते हैं, उस मायाक्षेत्र से ऊपर की ओर उसकी दूरी पचीस धनुष है।।१।।

वह कौमुद नामक तीर्थ है, जो कि तीनों लोकों में परम दुर्लभ है। हे विप्र! उस तीर्थ में स्नान करने से मनुष्य चन्द्रलोक में ऐश्वर्य का उपभोग करता है।।२।।

जो व्यक्ति ज्ञान से अथवा अज्ञान से भी कार्तिक, राध (वैशाख), माघ और मार्गशीर्ष (अगहन) महीनों में वहाँ स्नान करते हैं।।३।।

वे लोग ऐसे परम स्थान को प्राप्त करते हैं, जहाँ जाकर पुनः शोक नहीं रह जाता है। यदि कोई व्यक्ति भाग्य से वहाँ प्राणों का त्याग कर देता है।।४।।

वह चाहे पुरुष हो या नपुंसक अथवा पापिनी नारी हो, उसे ऐसे परम स्थान की प्राप्ति होती है, जहाँ से पुनः परावर्तन नहीं होता है।।५।।

**तस्य चिह्नं प्रवक्ष्यामि यथा तज्ज्ञायते परम्।**
**कुमुदस्य तथा गन्धो लक्ष्यते मध्यरात्रके॥६॥**
**अकस्माच्चन्द्रिका तत्र दृश्यते तीर्थराजके।**
**पुरा तत्र महाभाग चन्द्रो वै तप्तवाँस्तपः॥७॥**
**दिव्यं वर्षसहस्रं च महादेवमनुस्मरन्।**
**ततः प्रसन्नो भगवान् सन्तुष्टो वृषभध्वजः॥८॥**
**प्रादात्स्थानं ललाटे स्वे चन्द्राय ध्रुवमुत्तमम्।**
**कौमुदस्य तु मासस्य राकायां यन्निशाकरः॥९॥**
**वरं च प्राप्तवान् रुद्रात्तीर्थं कौमुदकं ततः।**

## शिवचन्द्रेश्वरतीर्थस्य माहात्म्यम्

**तस्यैव दक्षिणे भागे शिवचन्द्रेश्वराभिधः॥१०॥**
**यस्य दर्शनमात्रेण नश्यन्ते पापकोटयः।**
**चन्द्रेश्वरं सकृद्दृष्ट्वा स्नात्वा वै कौमुदे ह्रदे॥११॥**

---

अब मैं उसका चिह्न बतला रहा हूँ, जिससे उसको पहचाना जाता है। वहाँ से रात्रि के मध्य में कुमुद की सुगन्ध आती है।।६।।

उस तीर्थराज में अकस्मात् ही चन्द्रिका भी अवलोकित होती है। हे महाभाग! प्राचीनकाल में वहाँ पर चन्द्रमा ने तप किया था।।७।।

वे वहाँ दिव्य एक हजार वर्ष तक महादेव का स्मरण करते रहे। तदनन्तर वृषभध्वज भगवान् शङ्कर उनसे सन्तुष्ट और प्रसन्न हुए।।८।।

भगवान् शङ्कर ने चन्द्रमा को अपने उत्तम ललाट पर स्थान प्रदान किया। चन्द्रमा ने इस वर की प्राप्ति रुद्र से कौमुद (कार्तिक) मास की पूर्णिमा को की थी।।९।।

इसलिए उक्त तीर्थ का नाम कौमुद हुआ।

### शिवचन्द्रेश्वर तीर्थ का माहात्म्य

इस तीर्थ के दक्षिण भाग में शिवचन्द्रेश्वर नाम का तीर्थ है।।१०।।

जिसके दर्शन कर लेने मात्र से करोड़ों पाप विनष्ट हो जाते हैं। जो व्यक्ति एक बार भी चन्द्रेश्वर महादेव का दर्शन करता है और कौमुद ह्रद में स्नान करता है।।११।।

पुष्कलां लभते सिद्धिं विष्णुलोकं च गच्छति।

## सार्षपतीर्थस्य वर्णनम्

अन्यच्च ते प्रवक्ष्यामि तीर्थं सार्षपकं परम्॥१२॥
यस्य दर्शनमात्रेण शुद्धो भवति मानवः।
तस्माच्छरद्वये पुण्यं सर्वपापप्रणाशनम्॥१३॥
यत्र ब्रह्मा च रुद्रश्च विष्णुश्चैव सुरासुराः।
वापयामासुरत्यर्थं सर्षपान् यज्ञहेतवे॥१४॥
यदा दक्षो महातेजा गङ्गाद्वारसमीपतः।
चकार विपुलं यज्ञं यत्र दग्धा सती पुरा॥१५॥
ततश्चेदं महातीर्थं नाम्ना सार्षपकं स्मृतम्।
यत्र स्नानान्नरो याति लोकान् पुण्यान् सनातनान्॥१६॥

---

उसे विपुल सिद्धि का लाभ होता है और अन्त में विष्णुलोक को चला जाता था।

## सार्षप तीर्थ का वर्णन

अब मैं आपके प्रति सार्षप नामक अन्य तीर्थ का वर्णन करता हूँ।।१२।।

जिसके दर्शन करने मात्र से मनुष्य शुद्ध हो जाता है। उस चन्द्रेश्वर तीर्थ से दो बाण की दूरी पर अत्यन्त पवित्र और समस्त पापों का विनाश करने वाला यह तीर्थ है।।१३।।

यहाँ पर ब्रह्मा, विष्णु, रुद्र तथा देव और असुरों ने मिलकर यज्ञ के निमित्त बहुत अधिक सर्षप बोया था।।१४।।

यह उस समय का वृत्तान्त है, जब महातेजस्वी प्रजापति दक्ष ने गङ्गाद्वार (हरिद्वार) के समीप उत्कृष्ट यज्ञ का अनुष्ठान किया था और उसी यज्ञ में सती दग्ध हो गयी थी।।१५।।

उसी समय में यह महान् तीर्थ सार्षपक नाम से जाना जाने लगा। इस तीर्थ में स्नान करने से मनुष्य पुण्य और सनातन लोकों को प्राप्त करता है।।१६।।

अथात्र मुञ्चते प्राणान् महापापैर्युतोऽपि वा।
सङ्गच्छति परं स्थानं यत्र ब्रह्मादयः सुराः॥१७॥
यदि भाग्यवशाद्विप्र वैशाखे स्नाति मानवः।
तस्य पुण्यफलं वक्तुं कल्पेनापि न शक्यते॥१८॥
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम्।
तत्फलं लभते तत्र स्नानमात्रेण मानवः॥१९॥
तस्य चिह्नं प्रवक्ष्यामि मध्याह्ने मृगरूपधृक्।
समायाति रविः स्नातुं रविवारे विशेषतः॥२०॥

## कुब्जाम्रके पूर्णमुखतीर्थस्य वर्णनम्

अन्यच्च ते प्रवक्ष्यामि तीर्थं कुब्जाम्रके महत्।
नाम्ना पूर्णमुखं ख्यातं देवानामपि दुर्लभम्॥२१॥

---

जो व्यक्ति यहाँ पर प्राणों का परित्याग करता है, वह महापापों से मुक्त होकर उस परम स्थान को चला जाता है, जहाँ ब्रह्मा आदि देवता निवास करते हैं॥१७॥

हे विप्र! यदि कोई व्यक्ति सौभाग्य से वैशाख मास में इस तीर्थ में स्नान का अवसर प्राप्त करता है, उसके पुण्य का फल एक कल्प में भी नहीं कहा जा सकता है॥१८॥

सम्पूर्ण तीर्थों में जाने से जो पुण्य प्राप्त होता है और सम्पूर्ण यज्ञों के अनुष्ठान से जो फल मिलता है, उस फल को मनुष्य यहाँ स्नान करने मात्र से प्राप्त कर लेता है॥१९॥

उस तीर्थ का एक चिह्न बतला रहा हूँ—विशेषरूप से रविवार को भगवान् सूर्यनारायण मृग का रूप धारण कर मध्याह्न में स्नान करने के लिए आते हैं॥२०॥

## कुब्जाम्रक में पूर्णमुख तीर्थ का वर्णन

कुब्जाम्रक तीर्थ में ही पूर्णमुख नामक एक अन्य बड़ा तीर्थ है, उसका वर्णन मैं कर रहा हूँ; क्योंकि उस तीर्थ की प्राप्ति देवताओं के लिए भी दुर्लभ है॥२१॥

यत्र वै स्नानामात्रेण सोमलोकं स गच्छति।
ज्ञेयं तत्रोष्णसलिलं शीते गङ्गाजले पुनः॥
यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते॥२२॥

## सोमेश्वरमहालिङ्गस्य वर्णनम्

सोमेश्वरं महालिङ्गं जलमध्ये प्रवर्त्तते।
जलमध्येऽथ सम्पूज्य शिवलोके महीयते॥२३॥
शतवर्षसहस्राणि दिव्यभोगसमन्वितः।
ततस्तस्मात्परिभ्रष्टो ब्राह्मणः शुद्धवंशजः॥२४॥
जायते शिवभक्तश्च सर्वशास्त्रविशारदः।
पुनर्मुक्तिमवाप्नोति मृत्वा यत्तीर्थके परे॥२५॥
द्वादश्यां शुक्लपक्षे तु यस्तत्र कुरुते क्रियाम्।
सर्वा ह्यनन्तफलदास्तस्मात्पापं विवर्जयेत्॥२६॥

---

उस तीर्थ में स्नान करने मात्र से मनुष्य चन्द्रलोक में चला जाता है। उस तीर्थ की पहचान यह है कि वहाँ शीतल गङ्गाजल में भी गरम जल की अनुभूति होती है। जिसके दर्शन करने मात्र से मनुष्य सभी पापों से मुक्त हो जाता है।।२२।।

### सोमेश्वर महालिङ्ग का वर्णन

उस जल के मध्य में सोमेश्वर नामक महालिङ्ग विराजमान है। जल के मध्य में उनकी पूजा करने से मनुष्य शिवलोक में ऐश्वर्यों का उपभोग करता है।।२३।।

उस मनुष्य को शिवलोक में सौ सहस्र वर्षपर्यन्त दिव्य भोगों का उपभोग करने को मिलता है। तदनन्तर वहाँ से च्युत होकर शुद्ध ब्राह्मण वेश में उत्पन्न होता है।।२४।।

वहाँ भी वह सर्वशास्त्रविशारद एवं शिव का भक्त होता है। पुनः उस श्रेष्ठ तीर्थ में मृत्यु को प्राप्त होकर मुक्ति को प्राप्त कर लेता है।।२५।।

शुक्ल पक्ष की द्वादशी तिथि को जो मनुष्य वहाँ कोई सुकर्म करता है, उसके समस्त पाप विनष्ट हो जाते हैं और वह सम्पूर्ण कर्म उसके लिए अनन्त फल देने वाले हो जाते हैं।।२६।।

प्राणाँस्त्यजति वा ह्यत्र व्रतेन व्रततत्परः।
विष्णुर्ददाति साक्षाद्वै दर्शनं चामृतं तथा॥२७॥

## करवीरकतीर्थस्य वर्णनम्

तस्माद्बाणप्रमाणे हि तीर्थकं करवीरकम्।
माघमासे सिते पक्षे द्वादश्यां करवीरकः॥२८॥
पुष्पितो दृश्यते तत्र तस्मात्तज्ज्ञायते शुभम्।
पितृभ्यश्चाम्बुदानं हि यैः कृतं शुभलिप्सुभिः॥२९॥
कल्पकोटिसहस्रैस्तु विमानवरमाश्रितः।
मोदते भवने विष्णोः पितृभिः सह नारद॥३०॥

## पुण्डरीकतीर्थस्य वर्णनम्

ततो गच्छेत्पुण्डरीके तीर्थे पापवनानले।
यत्र चक्रप्रमाणो वै चरते कमठो मुने॥३१॥
मध्याह्ने तत्र देवेशो ह्यायाति निजशुद्धये।
तत्र स्नात्वा महाभाग पुण्डरीकफलं लभेत्॥३२॥

---

जो व्यक्ति व्रताचरण में तत्पर होकर इस तीर्थ में प्राण का परित्याग करता है, उसे भगवान् श्रीविष्णु साक्षात् अमृतस्वरूप अपना दर्शन प्रदान करते हैं अथवा अपना दर्शन देकर उसे अमरत्व प्रदान करते हैं।।२७।।

### करवीरक तीर्थ का वर्णन

उससे एक बाण की दूरी पर एक करवीर नामक तीर्थ है, माघ शुक्ल द्वादशी के दिन वहाँ कस्वीर का वृक्ष पुष्पित दिखाई पड़ता है। तब शुभ की प्राप्ति होती है। हे नारद! शुभ को चाहने वाले जो मनुष्य अपने पितरों को वहाँ जलदान करते हैं, वे पुरुषश्रेष्ठ विमानों में आरूढ़ होकर सहस्त्रों करोड़ कल्पपर्यन्त अपने पितरों सहित विष्णु के धाम में आनन्द प्राप्त करते हैं।।२८-३०।।

### पुण्डरीक तीर्थ का वर्णन

इसके बाद पुण्डरीक तीर्थ के लिये यात्रा करनी चाहिये। हे मुनि! वह तीर्थ पापरूपी वन के लिए अग्नि है। वहाँ पर चक्रप्रमाण का कच्छप विचरण करता रहता है।।३१।।

मध्याह्न में देवराज इन्द्र अपनी शुद्धि के लिए स्नानार्थ आते हैं। हे महाभाग! उसमें स्नान करने से पुण्डरीक (यज्ञ) के फल की प्राप्ति होती है।।३२।।

यस्तत्र त्यजते प्राणान् स याति हरिमव्ययम्।
यस्तत्र कुरुते दानं त्रुटिमात्रं हिरण्यकम्।।३३।।
दशानां पुण्डरीकानां यज्ञानां फलभाग्भवेत्।
अथान्यत्ते प्रवक्ष्यामि तीर्थं कुब्जाम्रके स्थितम्।।३४।।

## अग्नितीर्थ का वर्णन

पुण्डरीकस्य तीर्थस्य वामभागे धनुःशते।
गुह्यमेतच्छुभं कुण्डं ज्ञायते नैव पापिना।।३५।।
येन स्नातं च तीर्थेषु येन वै पूजनं हरेः।
कृतं तद्वै विजानाति तीर्थं परमपावनम्।।३६।।
यत्राग्निः संस्तुतो देवैः पुरा प्रादुर्बभूव ह।
तस्मादिदं परं तीर्थमग्निसंज्ञां गतं शुभम्।।३७।।
धन्यः स एव लोकेषु पुण्यात्मा मुनिपुङ्गव।
अग्नितीर्थं येन दृष्टं विष्णुसायुज्यदं परम्।।३८।।

---

जो प्राणी वहाँ अपने प्राणों का परित्याग करता है, वह अविनाशी भगवान् हरि को प्राप्त कर लेता है। जो वहाँ अणुमात्र भी सुवर्ण का दान करता है।।३३।।

वह दश पुण्डरीक यज्ञ करने के फल का भागी हो जाता है। अब कुब्जाम्रक तीर्थ में ही स्थित अन्य तीर्थों का वर्णन करता हूँ, उसे श्रवण करो।।३४।।

### अग्नितीर्थ का वर्णन

पुण्डरीक तीर्थ के वामभाग में सौ धनुष की दूरी पर एक तीर्थ है, यह कुण्ड अत्यन्त गोपनीय है तथा शुभ को प्रदान करने वाला है। पापियों को इसका दर्शन प्राप्त नहीं हो पाता है।।३५।।

जिसने उस पुण्डरीक तीर्थ में स्नान और भगवान् हरि का पूजन किया है, वही महात्मा इस परम पावन तीर्थ को जान सकता है।।३६।।

प्राचीनकाल में इस स्थान में देवताओं के द्वारा स्तुति किये जाने पर अग्निदेव प्रकट हुए थे, इसीलिए इस शुभ तीर्थ का नाम अग्नितीर्थ पड़ा।।३७।।

हे मुनिश्रेष्ठ! संसार में वही पुण्यात्मा मनुष्य धन्य है, जिसने भगवान् विष्णु की सायुज्य पदवी को प्रदान करने वाले इस परम पवित्र अग्नितीर्थ का दर्शन किया है।।३८।।

यदत्र क्रियते कर्म सर्वं तत्स्यादनन्तकम्।
यत्र वै स्नानमात्रेण ब्रह्महत्याग्रकोटिभिः।।३९।।
संयुक्तोऽपि नरः पापैर्मुच्यते नात्र संशयः।
त्रैलोक्ये धन्यतां याति दर्शनाद्दर्शनार्थवित्।।४०।।
अग्नितीर्थस्य संयोगो यावन्नो भवति द्विज।
तावत्कलिभयं विद्यात् स्पृष्टे पापक्षयो भवेत्।।४१।।

**।। इति श्रीस्कान्दे केदारखण्डे मायाक्षेत्रमाहात्म्ये कुब्जाम्रके एकोनविंशत्यधिकशततमोऽध्यायः ।।११९।।**

---

इस तीर्थ में जो जो शुभ कर्म किया जाता है, वह अनन्त फल देने वाला हो जाता है। इसमें केवल स्नान मात्र करने से ही ब्रह्महत्या आदि करोड़ों पापों से युक्त प्राणी भी सभी पापों से मुक्त हो जाता है, इसमें सन्देह नहीं है। तीर्थों के दर्शन के वास्तविक रहस्य को जानने वाले मनुष्य का कथन है कि इसके दर्शन करने से मनुष्य तीनों लोकों में धन्यवाद के योग्य हो जाता है।।३९-४०।।

हे द्विजश्रेष्ठ! जब तक अग्नितीर्थ का संयोग नहीं होता है, तभी तक कलियुग के पापों का भय बना रहता है; क्योंकि उस तीर्थ का स्पर्श होते ही पापों का विनाश हो जाता है।।४१।।

**।। इस प्रकार श्रीस्कन्दमहापुराण के अन्तर्गत केदारखण्ड में एक सौ उन्नीसवाँ अध्याय पूर्ण हुआ।।११९।।**

**[श्लोकसंख्या पूर्वागत-८३८+४१=८७९]**



# अथ विंशत्यधिकशततमोऽध्यायः

## एकान्तगतयोः शिवयोर्मध्ये गतस्याग्ने रुद्रकोपाद्दाहः

स्कन्द उवाच

**श्रृणु वत्स पुरावृत्तं पापघ्नं सर्वकामदम्।**
**यथा वैश्वानरो देवः प्राप्तवाञ्छापमीशतः॥१॥**
**एकदा हिमशोभाढ्ये कैलासे प्रमथावृते।**
**शिवश्च शिवया सार्द्धं क्रीडन्नास्ते रसाप्लुतः॥२॥**
**शालैस्तालैस्तमालैश्च खर्जूरैः पनसैर्वटैः।**
**भूर्जैर्भज्जकरैश्चैव कुङ्कुमैश्चम्पकद्रुमैः॥३॥**
**घने नीहारसंयुक्ते रजतेनेव संवृते।**
**तत्र स्वर्णमया वृक्षाः पक्षिणश्च हिरण्मयाः॥४॥**

---

## एकान्त में विद्यमान शिव-पार्वती के मध्य में जाने से रुद्र के कोप से अग्नि का दाह

**स्कन्द जी ने कहा**

हे वत्स! एक प्राचीन इतिहास का श्रवण करो। यह समस्त पापों का विनाश करने वाला और निखिल कामनाओं को पूर्ण करने वाला है। यह वही आख्यान है, जिससे अग्निदेव को भगवान् शिव से शाप की प्राप्ति हुई थी।।१।।

एक समय भगवान् शिव पार्वती के साथ प्रेमरस से सिञ्चित होते हुए हिम की शोभा से व्याप्त, प्रमथगण से घिरे हुए कैलास पर्वत पर क्रीड़ा कर रहे थे।।२।।

वह स्थान शाल, तमाल, ताल, खर्जूर, पनस (कटहल), वट, भूर्जपत्र, देवदारु, केसर और चम्पक के वृक्षों से सुशोभित था।।३।।

वह स्थान घने हिम से इस प्रकार आच्छादित था, मानों चाँदी से आवृत्त हो। वहाँ वृक्ष सुवर्णमय थे और पक्षी भी सुवर्णमय थे।।४।।

नानाप्रसवशोभाढ्ये धातुरागविभूषिते।
रमयामास देवेशो गिरौ गिरिजया सह॥५॥
वसन्तश्च सदा तत्र समग्रेणेन्दुना सह।
पुंस्कोकिलरुतैश्चैव तथा मधुरनिःस्वनैः॥६॥
पुष्पितानि वनान्यासन् विचेरुर्भ्रमरास्ततः।
एवं तस्मिन् वनोद्देशे क्रीडायां संस्थितौ शिवौ॥७॥
एतस्मिन्नन्तरे तत्र दर्शनार्थमुमापतेः।
आजगाम सुनासीरस्त्रिदशौघसमन्वितः॥८॥
यावद् गच्छति कैलासे प्रणन्तुं च सदाशिवम्।
तावन्निवारितो नन्दिगणेन प्रमथेशिना॥९॥
एकान्ते संस्थितो देवः शिवया सहितः प्रभो।
न कालो दर्शनस्याऽयं गच्छध्वं त्रिदशेश्वराः॥१०॥

---

विविध वनस्पतियों की शोभा से सम्पन्न वह पर्वत विविध धातुओं के राग से रञ्जित था, उसी दिव्य गिरि पर देवेश भगवान् शङ्कर गिरिजा के साथ रमण कर रहे थे।।५।।

पूर्ण चन्द्रमा के साथ वसन्त वहाँ सदा निवास कर रहे थे। मधुर शब्द का उच्चारण करने वाले कोकिलों की आवाज से वह पर्वत व्याप्त था।।६।।

वहाँ सम्पूर्ण वन पुष्पित हो रहे थे, इधर-उधर भ्रमर गुञ्जार कर रहे थे, इस प्रकार के वनविभाग में शिव-पार्वती क्रीड़ा में आसक्त थे।।७।।

इसी बीच उमाकान्त शिव के दर्शन करने की इच्छा से सुरराज इन्द्र देवसमाज के साथ वहाँ उपस्थित हुए।।८।।

जैसे ही वे लोग सदाशिव को प्रणाम करने के लिए कैलास पर्वत पर आये, उसी समय प्रमथों के स्वामी नन्दी नामक गण ने उन लोगों को रोक दिया।।९।।

उसने कहा कि हे प्रभो! पार्वती के साथ देव शङ्कर एकान्त में स्थित हैं, इसलिए यह दर्शन का उचित समय नहीं है, इसलिए आप लोग लौट जायें।।१०।।

इत्युक्तो नन्दिना शक्रो जगादाग्निमितः स्थितम्।
त्वमग्ने सर्वभूतानामन्तश्चरसि सर्वदा॥११॥
त्वया तत्र प्रगन्तव्यं विलीनेन मदाज्ञया।
सत्यं वा यदि वाऽसत्यं वदति प्रमथो ह्ययम्॥१२॥
शिवोऽन्तः किं प्रकुरुते सर्वं विज्ञाय चेष्टितम्।
शीघ्रं त्वयात्राऽऽगन्तव्यं मा विलम्बं कुरु प्रभो॥१३॥
इत्याज्ञां शिरसा धृत्वा वह्निः कालप्रचोदितः।
जगाम तत्र देशे हि यत्राऽऽस्ते भगवाञ्छिवः॥१४॥
अग्नेर्विचेष्टितं[1] ज्ञात्वा महादेवो दिवस्पतेः।
कारितं च तथा ज्ञात्वा शशापाग्निं त्वरान्वितः॥१५॥
यज्ञभागाश्च देवानां नाशमेष्यन्ति सत्वरम्।
अयमग्निश्च लोकाद्धि विनंक्ष्यति[2] न संशयः॥१६॥

---

जब नन्दी ने इस प्रकार कहा, तब इन्द्र ने अपने समीपवर्ती अग्नि से कहा—हे अग्नि! तुम सर्वदा सभी प्राणियों के अन्तर में विचरण करते हो।।११।।

इसलिए तुम हमारी आज्ञा से छिपकर वहाँ जाओ। पता नहीं कि यह प्रमथ सत्य कहता है या असत्य बोल रहा है।।१२।।

शिव भीतर क्या कर रहे हैं, इन सब चेष्टाओं को जानकर शीघ्र ही तुम यहाँ चले आना। हे प्रभो! इसमें विलम्ब मत करो।।१३।।

काल से प्रेरित अग्नि देवराज इन्द्र की आज्ञा को सिर से धारण कर जिस स्थान पर भगवान् शिव विराजमान थे, वहाँ गये।।१४।।

इन्द्र की प्रेरणा से किए हुए अग्नि की चेष्टा को जानकर महादेव ने तत्काल ही अग्नि को शाप दे दिया।।१५।।

देवताओं के यज्ञ का भाग अभी विनष्ट हो जायेगा, यह अग्नि भी इस लोक से विनष्ट हो जायेगा, इसमें कोई संशय नहीं है।।१६।।

---

१. विचेष्टिमिति ख.।
२. विनश्यतीति ख.।

इतीरितं शिवस्याग्निर्ननाश क्षणतस्तदा।
इन्द्रो वै दैवतैः सार्द्धं वेपमानो गृहं ययौ॥१७॥
निःस्वाध्यायवषट्कारं त्रैलोक्यमभवत्क्षणात्।
निश्चेष्टाश्च तथा ह्यासन् प्राणिनो वह्निवर्जिताः॥१८॥
प्रलये यानि कर्माणि तान्यासन् वह्निसङ्क्षये।
उल्कापाताश्च शतशो पेतुर्वै धरणीतले॥१९॥
इन्द्रोऽपि दैवतैः सार्द्धं ययौ क्षीरोदसागरे।
तत्र स्थितं रमानाथं ब्रह्मणा सहितस्तदा॥२०॥
ब्रह्माऽपि तत्र गत्वा च विष्णुं स्तोतुं प्रचक्रमे।
विनयावनतो भूत्वा वासवेन समन्वितः॥२१॥

ब्रह्मोवाच

नमस्ते भगवन् विष्णो चराचरगत प्रभो।
रमापते रसाधीश कृतदैत्यविनाशन॥२२॥

---

शिव के इस प्रकार कहने पर उसी क्षण अग्नि का नाश हो गया। देवताओं के साथ इन्द्र भी भय से काँपते हुए अपने स्थान को चले गये।।१७।।

उसी क्षण तीनों लोक वेद के पाठ और वषट्कार के नाद से रहित हो गये। अग्नि के अभाव में सभी प्राणी उस समय निश्चेष्ट हो गये।।१८।।

प्रलय के समय जो उत्पात होते हैं, वे सभी अग्नि के क्षय हो जाने से होने लगे। भूमण्डल के ऊपर सैंकड़ों उल्कापात होने लगे।।१९।।

तदनन्तर देवताओं सहित ब्रह्मा जी के साथ इन्द्र क्षीरसागर में गये, जहाँ रमापति विष्णु स्थित रहते हैं।।२०।।

वहाँ जाकर इन्द्र सहित ब्रह्मा जी विनय से अवनत होकर भगवान् विष्णु की स्तुति करने के लिए उद्यत हुए।।२१।।

**ब्रह्मा ने कहा**

हे भगवन्! आप सबके स्वामी और चराचर जगत् के गति (शरणदाता) हैं, आप लक्ष्मी के स्वामी हैं तथा रसों के अधीश्वर हैं। आपने ही दैत्यों का विनाश किया है। हम आपको नमस्कार करते हैं।।२२।।

मुरारये नमस्तेऽस्तु नमो भक्तजनाश्रय।
नमस्ते सुरराजाय सहस्राक्षाय ते नमः।।२३।।
ऋग्वेदाय नमस्तुभ्यं यजुर्वेद नमोऽस्तु ते।
सामवेदाय देवाय नमोऽथर्वस्वरूपिणे।।२४।।
अग्निनाशेन सर्वेषां नाशो भवति निश्चितम्।
निःस्वाध्यायवषट्कारं त्रैलोक्यं सचराचरम्।।२५।।
विनङ्क्ष्यामो रमानाथ वयं सर्वे सवासवाः।
त्वयैवेदं कृतं पूर्वमकाले क्षयमेति च।।२६।।
रुद्रशापाग्निनिर्दग्धो नष्टोऽग्निर्भुवनत्रये।
यदा यदा महाविष्णो ग्लानिर्भवति संसृतौ।।२७।।
तदा त्वयैव सर्वं हि कृतं शत्रुविनाशनम्।
पुनर्यथा वीतिहोत्रो जायते च तथा कुरु।।२८।।

---

आप मुर नामक दैत्य के शत्रु हैं, आपको नमस्कार है। आप अपने भक्तों को आश्रय प्रदान करते हैं, इसलिए आपको नमस्कार है। आप देवताओं के अधिपति हैं, आपके सहस्र नेत्र हैं, आपको हमारा नमस्कार है।।२३।।

आपका स्वरूप ऋग्वेद, यजुर्वेद, सामवेद और अथर्ववेद का है, अत एव आपको बारम्बार नमस्कार है।।२४।।

अग्नि के विनाश हो जाने के कारण सभी जीवों का नाश हो रहा है और चराचर त्रिलोकी में वेदपाठ और वषट्कार का पूर्णरूप से लोप हो गया है।।२५।।

हे रमाकान्त! इन्द्र सहित हम सभी देवता विनष्ट हो जायेंगे, आपकी निर्माण की हुई यह सृष्टि असमय में ही नाश को प्राप्त हो रही है।।२६।।

भगवान् रुद्र के शाप से जलते हुए अग्नि त्रैलोक्य से ही नष्ट हो रहे हैं। हे महाविष्णु! जब कभी सृष्टि ग्लानि को प्राप्त होती है, उस समय आप ही शत्रुओं का विनाश करते हैं। इसलिए इस समय भी आप ऐसा उपाय करें, जिससे पुनः अग्नि का प्रादुर्भाव हो जाय।।२७-२८।।

श्रीभगवानुवाच

गच्छध्वं त्रिदशाः सर्वे कुब्जाम्रकक्षेत्र उत्तमे।
तत्राऽहं च शिवश्चापि संस्थितौ[१] चतुरानन॥२९॥

तत्र ह्याराधयिष्यामो भगवन्तं महेश्वरम्।
नित्यं सन्निहितस्तत्र पिनाकी त्रिदशेश्वरः[२]॥३०॥

## देवैः शिवस्य स्तुतिः

स्कन्द उवाच

इति कृत्वा मतिं तां वै ब्रह्माद्यास्त्रिदिवौकसः।
गताः कुब्जाम्रके क्षेत्रे शिवं स्तोतुं प्रचक्रमुः॥३१॥

देवा ऊचुः

प्रतिष्ठितानीश्वरमार्यवृत्तिः कृत्तिप्रवृत्ते नवमालतीभे।
वृन्दारवन्द्याखिलमूर्त्तकन्दे नन्दीशवन्दीभवचन्द्रचूडे॥३२॥

---

**श्रीभगवान् ने कहा**

हे देवगण! आप सभी लोग श्रेष्ठ कुब्जाम्रक क्षेत्र में जायें, हे चतुर्मुख ब्रह्मा जी! वहाँ हम तथा भगवान् शिव दोनों स्थित रहते हैं।।२९।।

वहाँ हम लोग भगवान् महेश्वर की आराधना करेंगे; क्योंकि पिनाक धनुष को धारण करने वाले वहाँ नित्य निवास करते हैं। वे ही देवताओं के अधीश्वर भी हैं।।३०।।

**स्कन्द ने कहा**

ब्रह्मा आदि सभी देवता इस प्रकार मन्त्रणा कर कुब्जाम्रक क्षेत्र में गये और वहाँ भगवान् शिव की स्तुति करने के लिए उद्यत हुए।।३१।।

## देवताओं द्वारा शिव की स्तुति

**देवताओं ने कहा**

आर्य व्यवहार वाले हम ईश्वर के समीप आये हैं। वे हस्तिचर्म को धारण किये हैं। नव-मालती पुष्प के समान जिनकी कान्ति है, उनकी मूर्ति देवताओं से वन्दनीय है तथा वे सम्पूर्ण मूर्त्त जगत् के मूल हैं। वे नन्दी के स्वामी, संसार के रक्षक एवं चन्द्रमा को शिर पर धारण कर रहे हैं।।३२।।

---

१. संस्थित इति ग.।  २. त्रिदशेश्वरा इति ख.।

अधीश्वरे सागरकालकूटकण्ठे प्रचण्डापरवारहृद्ये।
विद्यानवद्येऽमितवैद्यविद्ये सिद्धे प्रसिद्धे विधुबुद्धिशुद्धे।।३३।।
भावः स्यान्नो भीतिभाजोंऽशभाजो भूयः स्याम श्वेतभूभृद्वरेशात्।
केशावासेऽनेन नीतांशरूपाद् भूतेशो भूभीमभूपान्तराजा।।३४।।
स्फुरद्विधुदलादिकं कलितकालिसम्मालिकं
सुनेत्रवनमञ्जरीप्रभवभूरिगङ्गास्पदम्।
वमद्विषपरम्पराभयकराहिभूषाधरं
धराधरसुतावरं परमहं भजामो वयम्।।३५।।
प्रपन्नपरमापहं वृजिनदोहमोहापहं
जलौघवरधीप्रदं सुरवरं धियार्थप्रदम्।
जरामरणकालिनं भवबलाज्ञसंशालिनं
गले कलितकालिकं भुवनपालकं चालकम्।।३६।।

---

जो सबके अधीश्वर हैं, समुद्र से उत्पन्न कालकूट विष को कण्ठ में धारण करते हैं, प्रचण्ड आपत्तियों को दूर करने वाले हैं। श्रेष्ठ विद्याओं से युक्त हैं, असीमित चिकित्सा विद्या को जानते हैं, सिद्ध और प्रसिद्ध हैं, चन्द्रमा के समान शुद्ध बुद्धि वाले हैं।।३३।।

आपमें हमारा भाव (आस्था) हो, हम लोग श्रेष्ठ कैलास पर्वत के स्वामी से भयभीत हैं, हम लोग पुनः यज्ञ के अंश के भागी हों, हे विष्णु में वास करने वाले! राजा आपको वंशरूप में ग्रहण करता है और आप भूमि के भयङ्कर राजाओं का नाश करने वाले राजा हैं।।३४।।

कान्तिमान् चन्द्रमा की कला को धारण करने वाले, कण्ठ में काली की मुण्डमाला की गणना करने वाले, सुन्दर नेत्ररूप वन-मञ्जरी से उत्पन्न अनेक गङ्गा के आस्पद, वमन करते हुए विषपरम्परा से भयोत्पादक सर्पों का आभूषण धारण करने वाले, पर्वतपुत्री के वर तथा परम शिव का हम भजन करते हैं।।३५।।

भक्तों के परम रक्षक, पापसमूह एवं मोह को दूर करने वाले, जलसमूह तथा श्रेष्ठ बुद्धि देने वाले, देवों में श्रेष्ठ, बुद्धि के दाता बुढ़ापा और मृत्यु के लिए कालस्वरूप, सांसारिक बल से यज्ञ को अनुगृहीत करने वाले, गले में कालकूट से विभूषित, संसार के पालक और उसके चलाने वाले हैं।।३६।।

**भजेम गजचर्मणा प्रकटशुद्धतत्कर्मणा**
**सुशोभितकटोत्कटं नटितभूरिचञ्चज्जटम्।**
**चराचरपरम्पराहरणधीरमन्दासुरा-**
**सुरेशमृतिकारकं जितमनोजकं तारकम्॥३७॥**
**श्रयेम नवभावनप्रखरचण्डनन्द्याहत-**
**प्रकीर्णमणिमञ्जरीमुकुटकूटभूतावृतम्।**
**महेशभवनं वनं परमुदा पुनर्भावितं**
**विरोधिविविधार्थदं विबुधवन्द्यपादे नताः॥३८॥**

स्कन्द उवाच

**इति देवैः स्तुतो देवो भगवान् पार्वतीपतिः।**
**आविर्बभूव तरसा वृषस्थश्चन्द्रशेखरः॥३९॥**
**उवाच वचनं देवान् ब्रह्मादीञ्जातवेदसम्।**
**इच्छतो भक्तिनम्राँस्तान् मेघगम्भीरनिःस्वनः॥४०॥**

---

गजचर्म से सुशोभित, शुद्ध कर्मों को प्रकट करने वाले, विशाल गण्डस्थल वाले, नृत्य करती हुई चञ्चल जटाओं वाले, चर-अचर जगत् की परम्पराओं का हरण करने वाले, धैर्यशाली, मूढ़ असुरों और असुरेश्वरों को मारने वाले, कामदेव को जीतने वाले, संसार का उद्धार करने वाले शिव का हम लोग भजन करते हैं।।३७।।

नवीन भावना से प्रखर एवं प्रचण्ड नन्दी आदि गणों से आहत होने से जिन पर्वत शिखरों पर मुकुट की मणि-मञ्जरियाँ बिखर गयी हैं, उन पर स्थित भूतगणों से घिरे हुए, परम प्रसन्नता से बार-बार ध्यान किये गये, परस्पर विरोधी विविध अर्थों को बतलाने वाले, वन में स्थित महेश के भवन का हम लोग आश्रय लेते हैं, देवों के वन्दनीय हे महेश! हम लोग आपके चरणों में नत हैं।।३८।।

**स्कन्द ने कहा**

इस प्रकार देवताओं द्वारा स्तुति किए जाने पर भगवान् पार्वतीपति महादेव वृष पर आरूढ़ एवं चन्द्रमा को ललाट में धारण करते हुए वहाँ शीघ्र ही प्रकट हो गये।।३९।।

उन्होंने भक्ति से नम्र ब्रह्मा आदि देवताओं तथा जातवेदा अग्नि के प्रति मेघ के समान गम्भीर वाणी में कहा।।४०।।

ईश्वर उवाच

भो भो देवगणाः सर्वे यदर्थपरिचिन्तया।
समागताः स्तुतोऽहं च सन्तुष्टः प्रवदामि वः॥४१॥
मन्नेत्रप्रभवेनाऽऽशु बह्निना कुरुत क्रतुम्।
आप्यायध्वं तथा भूता नयध्वं ददतो मम॥४२॥

स्कन्द उवाच

इत्युक्त्वा सहसा भीमो नेत्रज्वालां[१] भयानकाम्।
ददौ दीनान् महाभाग लेलिहानां त्रिलोककम्॥४३॥
तां ज्वालां शिवनेत्रोत्थां दृष्ट्वा त्रस्ताः सुरासुराः।
प्रसादयामासुरपि स्तोत्रेणाऽऽनतमस्तकाः॥४४॥

## सर्वसिद्धिप्रदायकान्यग्नेर्नामानि

देवा ऊचुः

अग्निर्वैश्वानरो वह्निः कृष्णवर्त्मा भयानकः।
प्रभवो विभवश्चैव वीतिहोत्रस्तनूनपात्॥४५॥

**ईश्वर ने कहा**

हे देवगण! आप लोग जिस वस्तु की चिन्ता करते हुए यहाँ आये हैं और मेरी स्तुति कर रहे हैं, उससे सन्तुष्ट होकर मैं आप लोगों से कहता हूँ।।४१।।

आप लोग मेरे नेत्र से उत्पन्न अग्नि से यज्ञ सम्पन्न करें, आप लोग प्राणियों को तृप्त करें, मेरे समीप से इस अग्नि को ले जायें, जिससे सभी प्राणी तृप्त हों।।४२।।

**स्कन्द ने कहा**

हे महाभाग! इतना कहकर रुद्र ने दीन-दुखी देवताओं को अपनी भयङ्कर नेत्र की ज्वाला प्रदान की, जो तीनों लोकों को चाट रही थी।।४३।।

शिव के नेत्र से उत्पन्न उस ज्वाला को देखकर देवता तथा दानव सभी भयभीत हो गये। नतमस्तक होकर उन लोगों ने स्तुति द्वारा अग्नि को प्रसन्न किया।।४४।।

## सर्वसिद्धिप्रदायक अग्नि के नाम

**देवताओं ने कहा**

आप अग्नि, वैश्वानर (विश्वानर के पुत्र), वह्नि, कृष्णवर्त्मा (कृष्ण मार्ग वाले), भयानक, प्रभव, विभव, वीतिहोत्र (जिसमें वीतिपुरोडाश आदि की आहुति दी जाती है) और तनूनपात् (जो शरीर को न गिराये) हैं।।४५।।

१. नेत्रज्वालेति ख.।

**भव्यो भीमो भीमनेत्रसमुत्थो देहसंस्थितः।**
**त्रैलोक्यदीपको भानुः स्वर्भानुः सर्वगस्तथा॥४६॥**

**चित्रभानुः शीतहन्ता शीतसंस्थः कृपाकरः।**
**धेनुको वाडवाजन्मा जाठरो जठरस्थितः॥४७॥**

**यज्ञनेता यज्ञभोक्ता भक्तगम्यो भयङ्करः।**
**कृपीटयोनिः शोचिष्माञ्ज्वलनो जातरूपदः॥४८॥**

**जातवेदा वेदसंस्थो ह्याश्रयाशो महाप्रभुः।**
**दानवारिर्ज्वलत्केशो मदनो दीनवत्सलः॥४९॥**

स्कन्द उवाच

**अग्नेरेतानि नामानि यः पठेत्प्रयतो नरः।**
**सर्वसिद्धिमवाप्नोति शतयज्ञफलं लभेत्॥५०॥**

---

आप भव्य, भीम, भयङ्कर रुद्र के नेत्र से उत्पन्न, देह में स्थित, तीनों लोकों के दीपक, भानु (अपनी प्रभा से दीप्त), स्वर्भानु (आकाश में दीप्त), सर्वगामी हैं।।४६।।

आप चित्रभानु (विचित्र प्रभा वाले) शीतनाशक, शीत में स्थित रहने वाले, कृपा करने वाले, धेनुक, वडवा से उत्पन्न, उदर में उत्पन्न होने वाले, उदर में निवास करने वाले हैं।।४७।।

आप यज्ञ के नेता हैं, यज्ञ का भोग करने वाले, भक्तों से गम्य और भयङ्कर हैं, कृपीट से उत्पन्न होने वाले, शोचिष्मान् (प्रकाश करने वाले), ज्वलन और जातरूप (सुवर्ण) को देने वाले हैं।।४८।।

आप जातवेद (जिससे धन का लाभ हो), वेदों में अवस्थित आश्रयाश (आधार का भक्षण करने वाले), महाप्रभु, दानवारि (दानवों के शत्रु), जलते हुए केशों वाले, मदन तथा दीनवत्सल हैं।।४९।।

**स्कन्द ने कहा**

जो मनुष्य प्रयत्नपूर्वक अग्नि के इन नामों का पाठ करता है, वह सभी प्रकार की सिद्धियों को प्राप्त कर लेता है तथा वह सौ यज्ञ के फल को प्राप्त करता है।।५०।।

मन्दाग्निर्यो नरो विप्र सुभक्त्या प्रतिपत्तिथौ।
नामामृतं पिबेन्नित्यं त्रिवारं नियतः शुचिः॥५१॥
मन्दाग्निस्तस्य नश्येद्वै सर्वरोगक्षयस्तथा।
धन्यो भवति लोकेषु पूतात्मा नात्र संशयः॥५२॥
स्तूयमानस्ततो वह्निः शान्तात्मा ह्यभवत्क्षणात्।
ततो देवा महेशाद्यास्तीर्थमेतत्समाश्रिताः॥५३॥
ततो मुने शुभं तीर्थमग्निसंज्ञं स्मृतं त्विदम्।
यत्र स्नात्वा शुभाँल्लोकान् प्राप्नोति च परं पदम्॥५४॥
तस्यैवमभिधानं तु कृत्वा देवाः सवासवाः।
प्राप्याग्निं शिवतो विप्र यथास्थानं ययुस्ततः॥५५॥
इति ते कथिता वह्नितीर्थोत्पत्तिः शुभङ्करी।
यां श्रुत्वाऽपि नरो याति पूतात्मा स्वर्गलोककम्॥५६॥

---

हे विप्र! जिस मनुष्य को मन्दाग्नि हो गयी है, वह नित्य प्रतिपदा तिथि को पवित्र होकर भक्तिपूर्वक इस नामामृत का तीन बार पाठ करे।।५१।।

ऐसा करने से उसकी मन्दाग्नि नष्ट हो जाती है, उसके सभी रोग नष्ट हो जाते हैं, वह पवित्रात्मा तीनों लोकों में धन्य हो जाता है, इसमें संशय नहीं है।।५२।।

इस प्रकार देवताओं द्वारा स्तुति किया जाता हुआ अग्नि क्षण भर में ही शान्त हो गया। उसी समय से महेश आदि सभी देवता इस तीर्थ में निवास करने लगे।।५३।।

हे मुनि! उसी समय से इस शुभ तीर्थ का नाम अग्नि पड़ गया, इस तीर्थ में स्नान करने से शुभ लोकों तथा परमपद की प्राप्ति होती है।।५४।।

हे विप्र! शिव से अग्नि को प्राप्त कर और उस तीर्थ का इस प्रकार अग्नितीर्थ नाम रखकर इन्द्र सहित सभी देवता अपने स्थानों को चले गये।।५५।।

हे नारद! इस प्रकार हमने तुम्हारे समक्ष शुभ करने वाले वह्नितीर्थ की उत्पत्ति का वर्णन किया है। इसका श्रवण कर मनुष्य पवित्र आत्मा वाला होकर स्वर्गलोक को प्राप्त कर लेता है।।५६।।

आषाढ्यां चैव द्वादश्यां कार्तिक्यां च विशेषतः।
तथा मार्गशिरे मासि द्वादश्यां दर्शकेऽपि वा॥५७॥
यः करोत्यग्निपूजां वै स्नानं दानं जपं तथा।
स याति परमाँल्लोकान् पुनरावृत्तिदुर्लभान्॥५८॥
चिह्नं तत्र प्रवक्ष्यामि येन तज्ज्ञायते शुभम्।
उष्णं भवति हेमन्ते ह्यष्टधारं महामते॥५९॥
गङ्गा भवति तत्रोष्णा ग्रीष्मे शीताऽतिमात्रतः।
यस्तत्र मुञ्चते प्राणान् दिव्याँल्लोकान् स गच्छति॥६०॥
[१]कोटिवर्षसहस्राणि विमानवरमास्थितः।
अप्सरोगणसंयुक्तो भोगभाग्भवति ध्रुवम्॥६१॥
भुक्त्वा भोगं पुनर्मर्त्यो राजा भवति धार्मिकः।
पुत्रपौत्रैः परिवृतः शत्रुपक्षविवर्जितः॥६२॥

---

विशेष रूप से आषाढ़ की पूर्णिमा, द्वादशी अथवा कार्तिकी पूर्णिमा या मार्गशीर्ष (अगहन) मास में द्वादशी के दिन जो मनुष्य अग्निपूजा, स्नान, दान, तथा जप करता है, वह परमलोक को प्राप्त करता है, जहाँ से फिर लौटना दुर्लभ है॥५७-५८॥

अब उसके चिह्न का वर्णन करता हूँ, जिससे उस तीर्थ की पहचान ठीक-ठीक हो जाय। हे महामति! हेमन्त ऋतु में वहाँ आठ धाराओं में उष्ण जल प्रवाहित होने लगता है॥५९॥

वहाँ गङ्गा भी उष्ण हो जाती हैं और ग्रीष्म ऋतु में गङ्गा का जल अत्यधिक शीतल हो जाता है। जो मनुष्य वहाँ अपने प्राणों का त्याग करता है, वह दिव्य लोकों को चला जाता है॥६०॥

श्रेष्ठ विमानों में आरूढ़ होकर वह सहस्र करोड़ वर्षपर्यन्त अप्सरासमूह से सेवित होता हुआ दिव्य भोगों का उपभोग करता है॥६१॥

इस प्रकार के भोगों का उपभोग करने के उपरान्त वह मनुष्य मर्त्यलोक में धार्मिक राजा होता है। वह पुत्र-पौत्र से युक्त होकर शत्रुपक्ष से रहित हो जाता है॥६२॥

---

१. कोटिवर्षमिति ग.।

संशास्ति पृथिवीमेतां ससागरवनावृताम्।
अन्ते तद्वैष्णवं धाम सम्प्राप्नोति न संशयः॥६३॥
एतदेव परं क्षेत्रं तीर्थं पुण्यतमं स्मृतम्।
तरन्ति मानुषा यस्माद् घोरं संसारसागरम्॥६४॥

**।। इति श्रीस्कान्दे केदारखण्डे कुब्जाम्रकेऽग्नितीर्थकथनं नाम विंशत्यधिकशततमोऽध्यायः ।।१२०।।**

---

वह मनुष्य सागरपर्यन्त काननसहित भूमि का शासन करता है, अन्त में वह निःसन्देह भगवान् विष्णु के परम धाम को सम्यक् रूप से प्राप्त कर लेता है, इसमें सन्देह नहीं है।।६३।।

इस परम क्षेत्र को पुण्यतम तीर्थ कहा गया है, क्योंकि इसी क्षेत्र से मनुष्य घोर संसाररूपी सागर को पार करते हैं।।६४।।

**।। इस प्रकार श्रीस्कन्दमहापुराण के अन्तर्गत केदारखण्ड में एक सौ बीस अध्याय पूर्ण हुआ।।१२०।।**

[श्लोकसंख्या पूर्वागत-८७९+६४=९४३]



# अथैकविंशत्यधिकशततमोऽध्यायः

## वायव्यतीर्थस्य माहात्म्यम्

स्कन्द उवाच

अन्यतीर्थं शृणु प्राज्ञ वायव्यं तीर्थमुत्तमम्।
कुब्जाम्रके महाभाग सर्वपापभयापहम्॥१॥
यत्र वायुस्तपस्तेपे पञ्चवर्षसहस्रकम्।
प्राप्तवाँश्च तथा तत्र दिक्पालत्वं महायशाः॥२॥
अस्मिन् कृतोदको यस्तु पुण्यात्मा पितृतारकः।
दिव्यवर्षसहस्राणि स्वर्गलोके महीयते॥३॥
यः करोति तथा स्नानं वाजपेयशतस्य च।
फलं प्राप्नोति मनुजः स्वयमेतद्वदामि ते॥४॥

---

## वायव्य तीर्थ का माहात्म्य

**स्कन्द जी ने कहा**

हे प्राज्ञ! अब आप वायव्य नामक अन्य तीर्थ के विषय में श्रवण करें। हे महाभाग! सम्पूर्ण पापों के भय को दूर करने वाला यह तीर्थ कुब्जाम्रक क्षेत्र ही विद्यमान है।।१।।

उसी स्थान में वायु ने पाँच हजार वर्षपर्यन्त तप का आचरण किया था। वहीं पर महान् यशस्वी वायु ने दिक्पाल के पद को प्राप्त किया था।।२।।

इस क्षेत्र में जो पुण्यात्मा पितरों को जल प्रदान करता है, उसके पितरों का तो उद्धार हो ही जाता है, वह व्यक्ति स्वयं भी दिव्य हजार वर्षों पर्यन्त स्वर्गलोक में ऐश्वर्य का उपभोग करता है।।३।।

जो मनुष्य उस तीर्थ में स्नान करता है, वह सौ वाजपेय यज्ञ करने का फल प्राप्त करता है, यह मैं आपसे स्वयं ही कह रहा हूँ।।४।।

यस्तत्र त्यजते प्राणान् वायव्ये विजितेन्द्रियः।
न स भूयो महाराज जायते नरलोकके॥५॥
तत्र चिह्नं प्रवक्ष्यामि वायव्यस्य महामते।
तत्राश्वत्थछदाश्चैव[१] चलन्ते वायुनेरिताः॥६॥
स्वनन्ते च तथा तत्र द्वादश्यां दृश्यते मुने।

## वासवतीर्थस्य माहात्म्यम्

अन्यत्तत्रैव विख्यातं वासवं तीर्थमुत्तमम्॥७॥
तत्र चिह्नं प्रवक्ष्यामि येन तज्ज्ञायते शुभम्।
पदानि तत्र दृश्यन्ते हस्तिनो वासवस्य तु॥८॥
नित्यमायाति तत्रैव वासवो वसुसंवृतः।
तत्र स्नानेन संयाति पुरुहूतपुरं शुभम्॥९॥

---

जो पुरुष इन्द्रियनिग्रहपूर्वक उक्त तीर्थ में प्राणों का परित्याग करता है, हे मुनिमहाभाग! वह पुनः नरलोक में जन्म नहीं लेता है।।५।।

हे महामति! अब मैं वायव्यक्षेत्र के चिह्न का वर्णन करता हूँ। वहाँ वायु से प्रेरित होने पर अश्वत्थ के पत्ते हिलते रहते हैं, अर्थात् उस क्षेत्र में अश्वत्थ के वृक्ष अधिक हैं।।६।।

हे मुनि! वहाँ वे द्वादशी के दिन ही शब्द करते हुए दिखाई पड़ते हैं। वहीं पर एक वासव तीर्थ भी विख्यात है।।७।।

## वासवतीर्थ का माहात्म्य

अब मैं वासवतीर्थ के चिह्न का वर्णन करता हूँ, जिससे उस शुभ उत्तम तीर्थ का ज्ञान हो जाय। वहाँ इन्द्र के हाथी के पैरों के चिह्न दिखाई पड़ते हैं।।८।।

इन्द्र वसु देवताओं से घिरे हुए वहाँ पर प्रतिदिन आते हैं। वहाँ स्नान करने से मनुष्य इन्द्र के शुभलोक को जाता है।।९।।

---

१. तत्राश्वत्थस्य पत्राणीति क., तत्राश्वत्थच्छदाश्चैव पत्राणीति ख.।

## चन्द्रिकानाम्न्याः पवित्रनद्याः कथनम्

चन्द्रिकेति समाख्याता नदी परमपावनी।
तत्सङ्गमे नरः स्नात्वा चन्द्रलोके महीयते॥१०॥
तत्रैव गणपो नाम भैरवो भीषणाकृतिः।
तत्र चिह्नं प्रवक्ष्यामि सिन्दूराभा तु मृत्तिका॥११॥
यस्य दर्शनमात्रेण नरो याति परां गतिम्।

## वारुणतीर्थस्य वर्णनम्

अन्यच्च तीर्थप्रवरं वारुणं वरुणास्पदम्॥१२॥
वरुणेन तपस्तप्तं शतं वै दिव्यवर्षकम्।
पाशं प्राप महादेवात्तीर्थेऽस्मिन् वारुणे वरे॥१३॥
उपोष्य दश रात्राणि यस्त्यजेदत्र देहकम्।
स याति रुद्रसदनं यावदाचन्द्रतारकम्॥१४॥
स यातो रुद्रसदनं पुनर्जायेत भूमिपः।
यत्कर्म क्रियते तत्र तत्सर्वं शतसंख्यकम्॥१५॥

---

### चन्द्रिका नामक पवित्र नदी का कथन

वहाँ पर चन्द्रिका नाम की एक परम पवित्र नदी विख्यात है। उसके सङ्गम-स्थल में स्नान कर मनुष्य चन्द्रलोक में जाकर ऐश्वर्य का उपभोग करता है।।१०।।

वहाँ पर भयानक आकृति वाले भैरव जी गणनायक के रूप में विराजमान हैं। उस तीर्थ के चिह्न का कथन करता हूँ, वहाँ की मृत्तिका का वर्ण सिन्दूर की कान्ति के समान है।।११।।

जिसके दर्शन मात्र से मनुष्य परम गति को प्राप्त कर लेता है।

### वारुण तीर्थ का वर्णन

वहीं पर वरुण से अधिष्ठित एक वारुण नामक अन्य तीर्थ भी है। उस तीर्थ में वरुण ने दिव्य एक हजार वर्ष पर्यन्त तप का आचरण किया था। उसी श्रेष्ठ तीर्थ में वरुण ने भगवान् महादेव से दिव्य पाश को प्राप्त किया था।।१२-१३।।

जो मनुष्य दश रात्रिपर्यन्त उपवास व्रत का आचरण करता हुआ तीर्थ में प्राणों का त्याग करता है, वह तब तक रुद्रलोक में जाकर निवास करता है, जब तक सूर्य और चन्द्रमा हैं। जब वह पुनः रुद्रलोक से लौटता है, उस समय वह राजा होता है। उस तीर्थ में जो भी कर्म किया जाता है, वह सौ गुना अधिक फल देने वाला हो जाता है।।१४-१५।।

## वाराहतीर्थस्य वर्णनम्

अथान्यत्ते प्रवक्ष्यामि वाराहं तीर्थमुत्तमम्।
यत्र विष्णुः क्रोडरूपी शिलारूपेण संस्थितः॥१६॥
तत्र वै स्नानदानाद्यैर्लभते परमं पदम्।

## सामुद्रकतीर्थस्य वर्णनम्

ततो वै उत्तरे भागे धनुषां च चतुःशते॥१७॥
सप्तसामुद्रकं नाम तीर्थं विष्णुसलोकदम्।
अश्वमेधत्रयस्यात्र फलं वै स्नानमात्रतः॥१८॥
कुब्जाम्रके परं पुण्यं त्रिषु लोकेषु दुर्लभम्।
भाग्येन यस्त्यजेत्प्राणाञ्जन्मनाशादिवर्जितः॥१९॥
तत्र चिह्नं प्रवक्ष्यामि सप्तसामुद्रके महत्।
विमलं हि तथा गाङ्गं दृश्यते चित्रवन्मुने॥२०॥

---

### वाराह तीर्थ का वर्णन

अब मैं आपसे उत्तम वाराह तीर्थ का वर्णन करता हूँ। उस तीर्थ में भगवान् विष्णु वाराहरूप से शिला बनकर स्थित है।।१६।।

उस तीर्थ में स्नान, दान आदि कर्म करने से परम पद की प्राप्ति होती है।

### सामुद्रक तीर्थ का वर्णन

उस तीर्थ से उत्तर की ओर चार सौ धनुष की दूरी पर एक सप्तसामुद्रक नाम का तीर्थ है।।१७।।

वह तीर्थ विष्णुलोक की प्राप्ति कराने वाला है। उसमें केवल स्नान करने से ही तीन अश्वमेध यज्ञ करने का फल प्राप्त होता है।।१८।।

यह पवित्र तीर्थ भी कुब्जाम्रक क्षेत्र में ही स्थित है। उसका प्राप्त होना त्रिलोकी में दुर्लभ है। जो मनुष्य भाग्यवशात् यहाँ प्राणों का परित्याग करता है, उसे पुनः जन्म-मरण का क्लेश भोगना नहीं पड़ता है, अर्थात् उसकी मुक्ति हो जाती है।।१९।।

सप्तसामुद्रक तीर्थ में जो उत्तम चिह्न हैं, अब मैं उनका वर्णन कर रहा हूँ। हे मुने! वहाँ पर निर्मल गङ्गा का वर्णन कर रहा हूँ। हे मुने! वहाँ पर निर्मल गङ्गा का जल चित्रवत् दिखाई पड़ता है।।२०।।

क्षीरवर्णं कदाचित्तु कदाचित्पीतवर्णकम्।
कदाचिद् दृश्यते रक्तं तथा मारकतप्रभम्॥२१॥
एतैर्नानाविधैश्चिह्नैर्ज्ञेयं तीर्थमिदं ध्रुवम्।
तत्र स्नानादिना विप्र लभ्यन्ते सर्वसिद्धयः॥२२॥

## ऋषिपर्वतस्य वर्णनम्

कुब्जाम्रकादुत्तरत ऋषिपर्वत उत्तमे।
ऋषयः सिद्धगन्धर्वास्तत्र सन्ति महामुने॥२३॥
नानाविधानि लिङ्गानि तत्र सन्ति पराणि वै।
यस्योपत्यधारायां हि गङ्गायाः पश्चिमे तटे॥२४॥
तपोवनं मुनीनां तु यत्र सौमित्रिरुत्तमः।
प्राप्तराज्ये तथा रामे निहते दशकन्धरे॥
[1]समाययौ तपस्तप्तुं लक्ष्मणो लक्ष्मणान्वितः॥२५॥

---

उसका वर्ण कभी क्षीर (दूध) के समान, कभी पीला, कभी लाल, कभी मरकत मणि के समान नीलवर्ण का दिखलाई पड़ता है।।२१।।

इन्हीं विविध चिह्नों के द्वारा उस तीर्थ को पहचानना चाहिये। हे विप्र! वहाँ स्नान आदि करने से सभी सिद्धियाँ प्राप्त हो जाती हैं।।२२।।

### ऋषिपर्वत का वर्णन

हे महामुनि! कुब्जाम्रक तीर्थ से उत्तर की ओर उत्तम ऋषि-पर्वत है। उस पर सिद्ध, गन्धर्व और मुनिजन निवास करते हैं।।२३।।

वहाँ पर अनेक प्रकार के उत्तमोत्तम लिङ्ग विद्यमान हैं। उस पर्वत की तलहटी की भूमि में गङ्गा का पश्चिमी तट स्थित है।।२४।।

वहाँ महर्षियों की तपोवन-भूमि है। दशवदन रावण को मारकर रामचन्द्र जी ने अपने राज्य को अङ्गीकार किया था, तदनन्तर शुभलक्षणसम्पन्न एवं अतिशय पराक्रमी सुमित्रानन्दन लक्ष्मण तप करने के लिये उसी स्थान पर आये थे।।२५।।

---

१. तस्योपत्येति क.।

## शेषनागस्य निवासस्थानम्

तस्मात्स्थलादधोभागे बिलमस्ति महत्तरम्।
तत्र शेषः स्वयं नित्यं वसते नात्र संशयः॥२६॥
श्वेतवर्णः श्वेतबिन्दुः कृष्णनेत्रः प्रदृश्यते।
पुण्यात्मभिर्महाभाग यैर्गन्तव्यं हरिक्षये॥२७॥

नारद उवाच

लक्ष्मणेन तपस्तप्तं किमर्थं तत्र तीर्थके।
किं प्राप्तं च फलं तेन शुद्धेन परमात्मना॥२८॥
किमर्थं तत्र वसते वासुकिः सर्पनायकः।
एतत्सर्वं समासेन कथयस्व शिवात्मज॥२९॥

## संक्षेपेण रामरावणयोर्युद्धवर्णनम्

स्कन्द उवाच

श्रृणु नारद वृत्तान्तं पापघ्नं सर्वकामदम्।
श्रुत्वापि यन्महाभाग मुच्यते सर्वकिल्विषैः॥३०॥

---

### शेषनाग का निवासस्थान

उस स्थान के नीचे की ओर एक बहुत बड़ा बिल है, उसमें स्वयं शेष जी निःसन्देह निवास करते हैं।।२६।।

हे महाभाग! उनका श्वेतवर्ण, श्वेतबिन्दु और कृष्ण नेत्र अवलोकित होता है; किन्तु यह दृश्य पुण्यात्माजन को ही दिखाई पड़ता है।।२७।।

**नारद ने कहा**

किस कारण से लक्ष्मण ने उस तीर्थ में तप का अनुष्ठान किया था, पुनः आत्मा अर्थात् अन्तःकरण के शुद्ध हो जाने पर उन्हें किस फल की प्राप्ति हुई थी।।२८।।

वहाँ सर्पराज वासुकि किस निमित्त निवास करते हैं। हे शिवनन्दन! यह सम्पूर्ण वृत्तान्त आप मुझसे संक्षेप में बतलायें।।२९।।

### संक्षेप में राम और रावण का युद्धवर्णन

**स्कन्द ने कहा**

हे नारद! पापों का नाश करने वाले समस्त कामनाओं को पूर्ण करने वाले उस वृत्तान्त को सुनो। हे महाभाग! उसके श्रवण करने से मनुष्य सभी प्रकार के पापों से मुक्त हो जाता है।।३०।।

पुरा रामो महातेजाः पितुराज्ञां समाश्रितः।
सीतया सहितो भ्रात्रा लक्ष्मणेन समन्वितः॥३१॥
ययौ वै दण्डकारण्ये नानामुनिगणान्विते।
पञ्चवट्यां महाभाग कृत्वा पर्णमयीं कुटीम्।
कारयामास भगवन्निवासार्थं महामतिः॥३२॥
तत्र वै वसतस्तस्य रामस्य विदितात्मनः।
रावणस्य स्वसा तत्र नाम्ना शूर्पणखा ययौ॥३३॥
दृष्ट्वा तौ भ्रातरौ तत्र कन्दर्पाविव रूपिणौ।
कामस्य वशमापन्ना चकमे तत्परिग्रहम्॥३४॥
रामस्य सविधे गत्वा विकटाङ्गी घटोदरी।
विहस्य वचनं प्रोचे रामं दशरथात्मजम्॥३५॥
भो भोः पुरुषशार्दूल भुवने त्वत्समो न हि।
आगच्छ त्वं मया सार्द्धं गिरीणां कन्दरेषु च॥३६॥
सङ्गमेषु नदीनां च वनान्तेषु महत्सु च।
क्रीडस्व त्वं मया सार्द्धं यौवनं ते निवर्त्तते॥३७॥

---

प्राचीनकाल में महातेजस्वी रामचन्द्र पिता की आज्ञा को मानकर पत्नी सीता और भाई लक्ष्मण के साथ अनेक मुनियों से व्याप्त दण्डकारण्य में चले गये थे। हे महाभाग! वहाँ पञ्चवटी में पर्णशाला बनाकर महामति राम ने निवास करने के लिये विचार बनाया।।३१-३२।।

आत्मतत्त्व के जानने वाले राम जब वहाँ निवास करने लगे, उस समय उनके समीप रावण की बहन शूर्पणखा गयी।।३३।।

कामदेव के समान सुन्दर रूप वाले दोनों भाई राम और लक्ष्मण को देखकर शूर्पणखा काम के वशीभूत हो गयी और उनके साथ विवाह करने की अभिलाषा करने लगी।।३४।।

विकट (कुडौल) अङ्ग वाली, घड़े के समान उदर वाली वह राक्षसी राम के समीप जाकर दशरथ के पुत्र रामचन्द्र से हँसकर बोली।।३५।।

हे नरश्रेष्ठ! संसार में तुम्हारे समान, अन्य कोई सुन्दर नहीं है। इसलिये आप हमारे साथ इस पर्वत की कन्दरा में चलें।।३६।।

आप मेरे साथ नदियों के सङ्गम और वन के मध्य में क्रीड़ा करें; क्योंकि आपका यौवन बीता जा रहा है।।३७।।

**चतुर्दशसहस्राणामधिपौ खरदूषणौ।**
**भ्रातरौ रामवीर्याढ्यौ जनस्थाननिवासिनौ॥३८॥**
**लङ्केश्वरेण प्रहितौ भ्रात्रा मे हिंसितुं मुनीन्।**
**अन्यथा वां भक्षयिष्ये अनया सह मानुष॥३९॥**
**इत्युक्तः सहसा रामस्तदा भागवतोत्तमः।**
**उवाच विहसन् वाक्यं सौमित्रिं वरयस्व भोः॥४०॥**
**अहं कलत्रवानस्मि सपत्नीको वरानने।**
**एवमुक्ता तु रामेण लक्ष्मणं च तथाऽब्रवीत्॥४१॥**
**लक्ष्मणोऽपि विहस्यैनामुत्तरं प्रोक्तवान् कटुम्।**
**ततः क्रुद्धा शूर्पणखा तान् हन्तुमुपचक्रमे॥४२॥**
**इति तच्चेष्टितं दृष्ट्वा रामो राजीवलोचनः।**
**चकर्त नासां कर्णौ च तस्यास्तत्र महामते॥४३॥**
**रुदन्ती रुधिरासिक्ता ययौ शीघ्रं खराश्रमम्।**
**खरं च दूषणं चैव ह्यानयामास सैनिकैः॥४४॥**

---

हे राम! मेरे भाई खर और दूषण चौदह हजार दैत्यों के अधिपति हैं, वे दोनों अत्यन्त बलशाली हैं और इसी जनस्थान में निवास करते हैं।।३८।।

मेरे भाई लङ्कापति रावण ने मुनियों की हिंसा करने के लिये उन दोनों को यहाँ भेजा है। हे मनुष्य! यदि तुम मेरा कहना नहीं मानोगे, तो मैं इस स्त्री के साथ तुम दोनों को खा जाऊँगी।।३९।।

हे भागवतोत्तम! जब उसने रामचन्द्र जी से इस प्रकार का वचन कहा, तब वे हँसकर उससे बोले। अये! तुम सुमित्रा के पुत्र लक्ष्मण का वरण करो।।४०।।

हे सुमुखि! मेरे पास स्त्री है, अतएव मैं सपत्नीक हूँ। जब रामचन्द्र ने उससे उस प्रकार कहा,तब वह इसी प्रकार लक्ष्मण के समीप जाकर कहने लगी।।४१।।

लक्ष्मण ने भी उसकी हँसी उड़ाते हुए कटु वचन में उससे उत्तर दिया। तदनन्तर शूर्पणखा क्रोधित हो गयी और उन सभी लोगों को मारने का उपक्रम करने लगी।।४२।।

कमल के समान नेत्र वाले रामचन्द्र ने जब उसकी ऐसी चेष्टा देखी। हे महामतिमान्! तब उन्होंने उसके नाक और दोनों कान काट डाला।।४३।।

इसके बाद रक्त से रञ्जित वह रोती-कलपती खर के आश्रम में गयी। वहाँ से सैन्य के साथ खर और दूषण को लिवा लायी।।४४।।

निहतौ राक्षसौ तेन रामेणाऽपि जनस्थले।
साऽपि कर्म महद् दृष्ट्वा ययौ लङ्कां विनासिका॥४५॥
रुधिराप्लुतसर्वाङ्गी जगाद परुषं वचः।
मृतोऽसि राक्षसश्रेष्ठ भ्रातरौ निहतौ तव॥४६॥
जनस्थाने मनुष्येण स्त्रीसहायेन रावण।
खरश्च निहतः सङ्ख्ये दूषणस्त्रिशिरास्तथा॥४७॥
अहं च विकृता तेन कृता त्वत्कार्यसम्मुखी।
स्त्रीरत्नं च त्वदर्थं हि ह्यानेतुमहमुद्यता॥४८॥
किं करोमि मम भ्रातर्हन्तुं त्वां समुपस्थितः।
स्वसुस्तद्गदितं श्रुत्वा रावणः क्रोधमूर्च्छितः॥
जगाम सहसा तत्र जनस्थाने महामते॥४९॥
अहरत्तत्र हैमेन छद्मयित्वा मृगेण तम्।
रामं राजीवपत्राक्षं सीतां नीत्वा गृहं ययौ॥५०॥

---

श्रीराम ने जनस्थान में उन दोनों राक्षसों को भी मार डाला। इसके बाद नाक, कान से रहित शूर्पणखा इस भयङ्कर कार्य को देखकर लङ्का चली गयी।।४५।।

उसका सम्पूर्ण शरीर रुधिर से लथपथ था, उसने रावण से कठोर वचन कहा। हे राक्षसश्रेष्ठ! क्या तुम मर गये हो? तुम्हारे दोनों भाई मारे गये।।४६।।

हे रावण! जनस्थान में स्त्री के साथ रहने वाले एक मनुष्य के द्वारा खर, दूषण और त्रिशिरा युद्ध में मार डाले गये।।४७।।

उसने ही मुझे भी कुरूपिणी बना दिया है, मैं तुम्हारा कार्य करना चाहती थी, क्योंकि मैं तुम्हारे लिये उस स्त्रीरत्न को लाना चाहती थी।।४८।।

हे भाई! मैं क्या करूँ? लगता है कि वह मनुष्य तुमको मारने के लिये ही वहाँ आये हैं। हे महामति! बहन शूर्पणखा के इस प्रकार के वचन को सुनकर रावण क्रोध से मूर्च्छित हो गया और एकाएक उस जनस्थान में चला गया।।४९।।

वहाँ उसने सुवर्ण के मृग को आधार बनाकर कमलपत्र के समान नेत्र वाले रामचन्द्र को छलकर सीता का हरण कर लिया और अपने घर ले आया।।५०।।

रामोऽपि तन्महाश्चर्यं दृष्ट्वा विस्मयमाययौ।
विलपन् प्रययौ भ्रात्रा ऋष्यमूके महागिरौ॥५१॥
सुग्रीवेण तथा सख्यं कृत्वा वै चाग्निसाक्षिकम्।
हत्वा च बालिनं तत्र स्थापयित्वा नृपासने॥५२॥
सुग्रीवं च तथा तेन ससैन्येन हनूमता।
अन्यैश्च कपिभिः सार्धं ययौ लङ्कां महायशाः॥५३॥
बभूव तुमुलं युद्धं नरवानररक्षसाम्।
लङ्कायां विविधैः शस्त्रैस्तथाश्मतरुवृष्टिभिः॥५४॥
निकुम्भिलाशिलायां तु तप्यमानं महत्तपः।
मेघनादं सौमित्रिविषमस्थं महायशाः॥५५॥
सञ्छाद्य शरधाराभिर्विभीषणसहायवान्।
निजघान महोरस्कं शार्दूल इव कुञ्जरम्॥५६॥
रामोऽपि कपिभिर्युक्तो हत्वा राक्षसमन्त्रिणः।
पुत्रान् सम्बन्धिनश्चैव निजघान दशाननम्॥५७॥

---

रामचन्द्र भी इस महान् आश्चर्य को देखकर अत्यन्त विस्मित हो गये और विलाप करते हुए भाई लक्ष्मण के साथ ऋष्यमूक नामक महान् पर्वत पर चले गये।।५१।।

वहाँ श्रीराम ने अग्नि को साक्षी बनाकर सुग्रीव के साथ मैत्री कर ली। इसके बाद बालि को मारकर सुग्रीव को राज्यासन पर बैठा दिया।।५२।।

इसके बाद सेना सहित सुग्रीव और हनुमान् के साथ महायशस्वी रामचन्द्र अन्य वानरों को साथ लेकर लङ्का में गये।।५३।।

वहाँ लङ्कापुरी में विविध प्रकार के अस्त्र-शस्त्रों से तथा पाषाण एवं वृक्षों की वर्षा करके नर, वानर और राक्षसों का भयङ्कर युद्ध हुआ।।५४।।

निकुम्भिला शिला में उग्र तप करते हुए विषम भाव से बैठे हुए मेघनाद को महायशस्वी सुमित्रानन्दन लक्ष्मण ने देखा।।५५।।

उन्होंने विभीषण की सहायता से बाण की वर्षा के द्वारा उसे ढ़क दिया और उस विशाल वक्षःस्थल वाले मेघनाद का वध उसी प्रकार कर दिया, जिस प्रकार सिंह हाथी को मार डालता है।।५६।।

तदनन्तर रामचन्द्र ने भी वानरों के साथ मिलकर राक्षसों, मन्त्रियों, पुत्रों और सम्बन्धियों को मार कर दश मुख वाले रावण को भी मार डाला।।५७।।

तत्र संस्थापयामास तद्भ्रातरमनिन्दितम्।
लङ्काधिपत्ये विप्रर्षे मन्दोदर्यास्तथैव च॥५८॥
इति तद्वै महत्कर्म कृत्वा रामो महायशाः।
लक्ष्मणश्च महाबाहुर्दृष्ट्वा सर्वान् दिवौकसः॥५९॥
तथा दशरथं चैव पितरं सुविमानगम्।
शुद्धिं दृष्ट्वा तु सीताया वह्नौ मानुषविग्रहः॥६०॥
विष्णुः पुष्पकमारुह्य सविभीषणवानरः।
सीतया सहितश्चैवायोध्यायां च समाययौ॥६१॥

## लक्ष्मणस्य राजयक्ष्माप्राप्तिः

तत्रासने शुभे पित्र्ये रामे राज्यं प्रशासति।
राजयक्ष्मा लक्ष्मणं च जगृहे गेहसंस्थितम्॥६२॥
तथाविधं लक्ष्मणं हि रोगग्रस्तं समीक्ष्य सः।
रामो नाम महातेजाश्चिन्तयामास राघवः॥६३॥

---

हे विप्र! इसके बाद राम ने वहाँ लङ्का के राज्यसिंहासन पर मन्दोदरी के निरीक्षण में रावण के यशस्वी भाई विभीषण को स्थापित कर दिया।।५८।।

इस प्रकार का उग्र कर्म करने के पश्चात् महायशस्वी रामचन्द्र और विशालबाहु लक्ष्मण ने सभी देवताओं का दर्शन किया।।५९।।

पुनः सुन्दर विमान में आरूढ होकर अपने पिता दशरथ का भी दर्शन किया। इसके साथ अग्नि में शुद्ध हुई सीता का अवलोकन किया।।६०।।

विभीषण तथा वानरों सहित पुष्पक विमान में आरूढ़ होकर सीता के साथ विष्णुस्वरूप राम अयोध्या पुरी में आये।।६१।।

## लक्ष्मण को राजयक्ष्मा रोग की प्राप्ति

वहाँ जब रामचन्द्र पिता के शुभ राज्यसिंहासन पर आरूढ़ होकर राज्य का शासन करने लगे, उस समय घर में ही निवास करने वाले लक्ष्मण को राजयक्ष्मा रोग ने घेर लिया।।६२।।

इस प्रकार रोगग्रस्त लक्ष्मण को देखकर महातेजस्वी, रघुवंशभूषण रामचन्द्र चिन्ता करने लगे।।६३।।

पप्रच्छ च वसिष्ठं वै स्वगुरुं ब्रह्मपुत्रकम्।
केन वै कर्मणा चेमं राजयक्ष्मा गृहीतवान्।।६४।।
इति मे संशयं देव छिन्धि धीरवर प्रभो।
इत्युक्तो मुनिराड् विप्रः कथयामास पातकम्।।६५।।

## वसिष्ठोपदेशाद्रामलक्ष्मणयोः कुब्जाम्रक्षेत्रे तपःकरणम्

वसिष्ठ उवाच

इन्द्रजिद्वधनिर्णीतं घोररूपं महत्तरम्।
यस्मादेतस्य तपतः शिरश्चिच्छेद लक्ष्मणः।।६६।।
युद्धाद्वै विनिवृत्तस्य ब्रह्मवंशस्य रक्षसः।
तस्मादयं महातेजा राजरोगप्रपीडितः।।६७।।
तपस्तपतु कुब्जाम्रे लक्ष्मणो लक्ष्मिवर्द्धनः।
ततोऽयं भविता शीघ्रं राजयक्ष्मविवर्जितः।।६८।।
त्वं च राम महाबाहो प्रायश्चित्तं तपात्मकम्।
कुरुष्व रावणवधजन्यपापापनुत्तये।।६९।।

---

तदनन्तर उन्होंने ब्रह्मा के पुत्र अपने कुलगुरु वसिष्ठ से पूछा कि किस कर्म को करने से लक्ष्मण को इस राजयक्ष्मारोग ने सताया है।।६४।।

धैर्यशालियों में श्रेष्ठ हे प्रभो! हमारे इस सन्देह को आप दूर करें, जब द्विजराज से रामचन्द्र ने इस प्रकार कहा, तब वे पातक का वर्णन करने लगे।।६५।।

## मुनि वसिष्ठ के उपदेश से राम और लक्ष्मण का कुब्जाम्रक क्षेत्र में तपस्या करना

**वसिष्ठ जी ने कहा**

मेघनाद के वध करने से यह घोर पातक उत्पन्न हुआ है, क्योंकि लक्ष्मण ने तप करते हुए इस मेघनाद का शिरछेदन कर दिया था।।६६।।

वह राक्षस उस समय युद्ध से पराङ्मुख था, ब्राह्मण के वंश में उत्पन्न उस राक्षस के वध करने के कारण महातेजस्वी लक्ष्मण इस राजरोग से प्रपीडित हैं।।६७।।

इसलिये लक्ष्मी को बढ़ाने वाले लक्ष्मण कुब्जाम्रक नामक तीर्थ में तप करें। ऐसा करने से ये शीघ्र ही राजयक्ष्मा रोग से रहित हो जायेंगे।।६८।।

हे महाबाहु राम! तुम भी रावण के वध से उत्पन्न पाप की शान्ति के लिये तपरूप प्रायश्चित्त करो।।६९।।

इति श्रुत्वा महातेजा विस्मयाविष्टमानसः।
पप्रच्छ गुरुमासीनं वसिष्ठं वाग्विदां वरम्॥७०॥

राम उवाच

ब्रह्मवंशसमुत्पन्नरावणस्य वधान्मुने।
कथं मे पातकं जातं पापस्य दुरितात्मनः॥७१॥
गोविप्रहतकस्यापि देवानां चैव द्रोहिणः।
हर्त्तुश्च परदाराणां परक्षेत्रधनादिनाम्॥७२॥
कथं तन्मारणे[1] पापं युद्धस्योच्छ्वासवर्त्तिनः।
एतन्मे संशयं छिन्धि सर्वज्ञोऽसि यतो मुने॥७३॥

॥ इति श्रीस्कान्दे केदारखण्डे मायापुरीमाहात्म्ये कुब्जाम्रके लक्ष्मणोपाख्यानवर्णनं नामैकविंशत्यधिकशततमोऽध्यायः ॥१२१॥

---

इस प्रकार के गुरु के वचन को सुनकर महातेजस्वी राम का मन विस्मय से आविष्ट हो गया। तदनन्तर उन्होंने विद्वानों में श्रेष्ठ, आसनासीन गुरु वसिष्ठ से पूछा॥७०॥

**राम ने कहा**

हे मुनीश्वर! यद्यपि रावण ब्राह्मण वंश में उत्पन्न था, तथापि वह दुराचारी पापी था, तब उस रावण के वध से मुझे पाप क्यों लगा?॥७१॥

वह दुष्ट गौ, ब्राह्मण का हत्यारा था, देवताओं का द्रोही था, उसने पराई स्त्रियों का, दूसरे के धन का एवं अन्य के क्षेत्र का हरण किया था॥७२॥

ऐसे निर्दयी के वध करने में मुझे पाप क्यों लगा, क्योंकि वह तो युद्ध करने के लिये भी तत्पर था। हे मुनिराज! आप सर्वज्ञ हैं, अतएव मेरे इस सन्देह को दूर करें॥७३॥

**॥ इस प्रकार श्रीस्कन्दमहापुराण के अन्तर्गत केदारखण्ड में एक सौ इक्कीस अध्याय पूर्ण हुआ॥१२१॥**

**[श्लोकसंख्या पूर्वागत-९४३+७३=१०१६]**



---

१. तन्मारके इति ख.।

# अथ द्वाविंशत्यधिकशततमोऽध्यायः

## ब्राह्मणस्य महत्त्ववर्णनम्

वसिष्ठ उवाच

श्रृणु राम महाबाहो ब्राह्मणानां महामते।
माहात्म्यं सर्वपापघ्नं तापत्रयविनाशनम्॥१॥
ब्राह्मणा जङ्गमा मूर्त्तिः श्रीविष्णोः परमात्मनः।
अत एव हि विख्याताः[१] क्षितिदेवा महामते॥२॥
येषां वै दर्शनात्सद्यो नश्यन्ते पापराशयः॥३॥
ब्राह्मणानां च सञ्चारो यत्र तिष्ठति सर्वदा।
तत्र सर्वाणि तीर्थानि वसन्ति नितरां सदा॥४॥
भोजनीयाः प्रयत्नेन यद्यदिच्छन्ति तेन ते।
यत्किञ्चिद्दुर्ल्लभं वस्तु ब्राह्मणेभ्यो ददेत्तु तत्॥५॥

---

## ब्राह्मण के महत्त्व का वर्णन

**वसिष्ठ ने कहा**

हे महाबाहु, राम! आप अति बुद्धिमान् हैं, आप ब्राह्मणों के माहात्म्य को सुनें, यह माहात्म्य सब पापों का नाश करने वाला तथा दैहिक, दैविक, भौतिक तीनों प्रकार के तापों को शान्त करने वाला है।।१।।

हे मतिमान्! ब्राह्मण भगवान् श्रीविष्णु की जङ्गम (चलती-फिरती) मूर्ति हैं, इसी कारण ये पृथिवी के देवता (भूसुर) नाम से प्रसिद्ध हैं।।२।।

ब्राह्मणों के दर्शन करने से पापसमुदाय शीघ्र ही नष्ट हो जाते हैं।।३।।

जिस स्थान में ब्राह्मणों का सञ्चार (आवागमन) होता है, वहाँ सम्पूर्ण तीर्थ नित्य निवास करते हैं।।४।।

ब्राह्मणों की जो-जो इच्छा हो, प्रयत्नपूर्वक उसी का उन्हें भोजन कराना चाहिये। जो वस्तु दुर्लभ हैं, उन्हीं वस्तुओं को उन्हें प्रदान करना चाहिये।।५।।

---

१. विख्यात इति ख.।

ब्राह्मणानां च सङ्गत्या ब्राह्मणानां च पूजनात्।
तर्पणाद् ब्राह्मणानां च पितॄणां तारणं भवेत्॥६॥
तस्मात्सर्वप्रयत्नेन नरो ब्राह्मणमाश्रयेत्।
ब्रह्मवीर्यसमुत्पन्नो वरजातिषु वा विभो॥७॥
सोऽपि देवो महाराज विज्ञेयो भवलिप्सुभिः।
ब्राह्मणस्य पदाङ्गुष्ठे दक्षिणे नरपुङ्गव॥८॥
सर्वतीर्थानि पुण्यानि वसन्ति नितरां सदा।
यावन्ति विप्रपादोत्थरजांसि शिरसा नरैः॥९॥
धार्यन्ते नरशार्दूल तावद्वर्षसहस्रकम्।
स्वर्गलोके वसेन्मर्त्यो विमानवरमास्थितः॥१०॥
यावन्त्यः कणिका देहे पतन्ति चरणाम्बुनः।
तावद्वर्षसहस्राणि ब्रह्मलोके महीयते॥११॥
श्राद्धे च ब्राह्मणा यत्र न सन्ति नृपसत्तम।
पितरश्चैव तेषां च नरके निवसन्त्यलम्॥१२॥

---

ब्राह्मणों की सङ्गति, उनका पूजन तथा उनको तृप्त करने से पितरों का उद्धार हो जाता है।।६।।

इसलिये मनुष्यों को सर्वथा प्रयत्नपूर्वक ब्राह्मणों का आश्रय करना कर्तव्य है। हे विभो! ब्राह्मण तो श्रेष्ठ जाति में ब्रह्मा के तेज से उत्पन्न हुआ है।।७।।

हे महाराज! संसार में लिप्त रहने वाले मनुष्यों को चाहिये कि वे ब्राह्मण को देवता समझें। हे नरश्रेष्ठ! ब्राह्मणों के दाहिने पैर के अङ्गुष्ठ में सम्पूर्ण पवित्र तीर्थ सर्वदा निवास करते हैं। मनुष्य अपने शिर के ऊपर ब्राह्मणों के चरणरज के जितने कण धारण करता है। हे नरश्रेष्ठ! उतने सहस्रवर्षपर्यन्त वह पुरुष श्रेष्ठ विमान में आरूढ़ होकर स्वर्गलोक में निवास करता है।।८-१०।।

ब्राह्मणों के चरणप्रक्षालन के जल के जितने कण मनुष्य के शरीर पर पड़ते हैं, उतने सहस्रवर्षपर्यन्त वह मनुष्य ब्रह्मलोक में ऐश्वर्य-भोग को प्राप्त करता है।।११।।

हे राजश्रेष्ठ! जिनके श्राद्ध में ब्राह्मण लोग उपस्थित नहीं रहते हैं, उनके पितर निरन्तर नरक में निवास करते हैं।।१२।।

---

१. धार्य्यमिति ख.।

**मूर्खा अपि महाबाहो ब्राह्मणाः पुण्यसञ्चयाः।**
**किं पुनश्चैव विद्वांसो वेदवेदाङ्गपारगाः॥१३॥**
**धन्यास्ते पुरुषा लोके ब्राह्मणानां च ये प्रियाः।**
**ये विप्रपूजाकामार्था न तेषां पुनरागमः॥१४॥**
**ते सर्वे निर्जरा ज्ञेया ब्राह्मणान् प्रणमन्ति ये।**
**विप्रपादोदकं पुण्यं सर्वव्याधिविनाशनम्॥१५॥**
**सर्वपापप्रशमनं सर्वोपद्रवनाशनम्॥१६॥**
**धन्यं वै कीर्त्तितं विष्णोर्धन्यं ब्राह्मणपूजनम्।**
**विप्रपादोदकं धन्यं धन्यं गङ्गाजलं स्मृतम्॥१७॥**
**ब्राह्मणानां प्रसादाद्वै लभ्यन्ते सर्वसिद्धयः।**
**ब्राह्मणानां प्रकोपेण दह्यन्ते भवकोटयः॥१८॥**

---

हे महाबाहु! मूर्ख ब्राह्मण भी पुण्यराशि होते हैं, क्योंकि पुण्य के सञ्चय होने पर ही ब्राह्मण जाति में जन्म होता है। अतः वे पुण्य समूह को देने वाले हैं। वेद और वेदाङ्ग के ज्ञाता विद्वानों के लिये तो कहना ही क्या है।।१३।।

लोक में वे मनुष्य धन्य हैं, जो ब्राह्मणों को प्रिय हैं, जो प्राणी ब्राह्मणों का पूजन करने की कामना करते हैं, संसार में उनका पुनर्जन्म नहीं होता है।।१४।।

वे सभी लोग भी देवता ही हैं, जो प्रतिदिन ब्राह्मणों को प्रणाम करते हैं। ब्राह्मणों का पवित्र चरणोदक सम्पूर्ण व्याधियों का विनाश करने वाला है।।१५।।

विप्र का चरणोदक सभी पापों का शमन करने वाला एवं सभी प्रकार के उपद्रवों को शान्त करने वाला होता है।।१६।।

भगवान् विष्णु का कीर्तन, ब्राह्मणों की पूजा, ब्राह्मणों के चरणों का जल और गङ्गा का जल ये सब धन्य माने गये हैं। अर्थात् इन सब को श्रेष्ठ कहा गया है।।१७।।

जिस मनुष्य पर ब्राह्मण प्रसन्न हो जाते हैं, उस मनुष्य को सभी सिद्धियाँ प्राप्त हो जाती हैं; किन्तु ब्राह्मणों के क्रोधित हो जाने से करोड़ों लोक दग्ध हो जाते हैं।।१८।।

अविद्योऽपि महाराज नावमान्यो द्विजः सदा।
अविद्यो वा सविद्यो वा ब्राह्मणो भगवत्तनुः॥१९॥
संसारतापतप्तानां भेषजं ब्राह्मणा विभो।
यावद् ब्राह्मणपूजाऽस्ति यावद् गङ्गा धरातले॥२०॥
यावद्वेदमयो घोषस्तावन्नो विशते कलिः।
ब्राह्मणोऽस्ति परं तत्त्वं ब्राह्मणोऽस्ति परं तपः॥२१॥
ब्राह्मणोऽस्ति परा विद्या नास्ति ब्राह्मणतः क्वचित्।
अविद्यं ब्राह्मणं वाऽपि सविद्यं वा नराधिप॥२२॥
योऽवमन्यति दुष्टात्मा तस्यर्द्धिर्नश्यति क्षणात्।
तस्मात्सर्वप्रयत्नेन नावमन्येद् द्विजातिकम्॥२३॥
ब्राह्मणानां प्रकोपेण नहुषोऽजगरतां गतः।
तस्मात्सर्वप्रयत्नेन ब्राह्मणं नाऽवकोपयेत्॥२४॥

---

हे महाराज! ब्राह्मण चाहे विद्याविहीन ही क्यों न हो, परन्तु उसका निरादर नहीं करना चाहिये, क्योंकि ब्राह्मण विद्वान् हो या विद्याहीन हो, वह भगवान् नारायण का शरीर कहा गया है।।१९।।

हे विभो! जो व्यक्ति सांसारिक तापों से सन्तप्त हैं, उनके लिये ब्राह्मण ही औषधिस्वरूप हैं, अर्थात् जो प्राणी सांसारिक क्लेशों से व्यथित हैं, ब्राह्मण अपने उपदेश से उन्हें शान्ति प्रदान करते हैं। भूमि के ऊपर जब तक ब्राह्मणों की पूजा और गङ्गाजल विद्यमान है।।२०।।

जब तक पृथिवी पर वेद का निर्घोष हो रहा है, तब तक कलि अर्थात् पापों का प्रवेश नहीं हो सकता है। ब्राह्मण परम तत्त्व हैं, ब्राह्मण परम तप हैं।।२१।।

ब्राह्मण ही श्रेष्ठ विद्या हैं, ब्राह्मण से बढ़कर कुछ भी नहीं है। हे राजन्! ब्राह्मण विद्वान् हो अथवा अविद्वान् हो, चाहे जैसा भी हो, उसका जो निरादर करता है, उसका ऐश्वर्य क्षणभर में नष्ट हो जाता है। अतएव ब्राह्मणों का निरादर कदापि नहीं करना चाहिये। इसलिये पूर्ण प्रयत्न के साथ कभी भी ब्राह्मणों का अपमान नहीं करना चाहिये।।२२-२३।।

क्योंकि ब्राह्मणों के प्रकोप के कारण राजा नहुष अजगर की योनि को प्राप्त किये थे। इसलिये यह सदा प्रयत्न करना चाहिये कि ब्राह्मण कुपित न हों।।२४।।

वेदलेशोऽस्ति यत्रेश शास्त्रलेशोऽपि यत्र च।
तस्य दर्शनमात्रेण नश्यन्ते पापराशयः॥२५॥
वेदविन्मानुषो विप्रः स वै यत्र प्रगच्छति।
गच्छन्ति तत्र निधयः क्षेत्राण्यतितरां तथा॥२६॥
यत्रास्ति शास्त्रवेत्ता हि तत्र विष्णुः सनातनः।
पुराणसंहितावक्ता[१] यत्र सञ्चरते द्विजः॥२७॥
तत्रैव सर्वतीर्थानि देवाः सर्वे प्रतिष्ठिताः।
ब्रह्महत्यादिपापानां ब्राह्मणादेव निष्कृतिः॥२८॥
गतश्रियश्च मर्त्या ये तथा चैव गतायुषः।
द्विषन्ति ब्राह्मणान् ये वै ते वा[२] नरकगामिनः॥२९॥
आसन्नमरणा ज्ञेया हतश्रीकाश्च राघव।
ये द्विषन्ति महाभाग भिषक्कालज्ञसत्तमान्॥३०॥
यस्य भाव्या परा सिद्धिर्यस्य भाव्या महार्थता।
यस्य भाव्यं परं ज्ञानं तस्य ब्राह्मणसङ्गतिः॥३१॥

हे राजन्! जिस ब्राह्मण में वेद का लेश मात्र भी है, अथवा जिसमें शास्त्र का लेश है, उस ब्राह्मण के दर्शन करने मात्र से पापों का विनाश हो जाता है।।२५।।

वेदों का जानने वाला ब्राह्मण मनुष्य जहाँ जाता है, वहीं सब निधियाँ और सम्पूर्ण तीर्थ चले जाते हैं।।२६।।

जहाँ शास्त्रज्ञ ब्राह्मण रहते हैं, उसी स्थान में सनातन भगवान् विष्णु का निवास होता है। पुराणों और संहिताओं का पाठ करने वाला ब्राह्मण जहाँ जाता है, उसी स्थान में सभी देवता और सम्पूर्ण तीर्थ प्रतिष्ठित हो जाते हैं। ब्रह्महत्या आदि पापों का उद्धार भी ब्राह्मण से ही होता है।।२७-२८।।

जिनकी लक्ष्मी और आयु नष्ट हो चुके हैं, अथवा जो नरक में जाने वाले हैं, वे ही लोग ब्राह्मणों से द्वेष करते हैं।।२९।।

हे महाभाग! राघव! कालज्ञानी श्रेष्ठ वैद्यों के समान ब्राह्मणों से जो लोग द्वेष करते हैं, उनकी मृत्यु को निकट और उनकी लक्ष्मी को नष्ट समझना चाहिये।।३०।।

जिसको अपार सिद्धि प्राप्त होने वाली है, जिसे प्रभूत धन प्राप्त होने वाला है, जिसे परम ज्ञान की प्राप्ति होने वाली है, उसी मनुष्य को ब्राह्मणों की सङ्गति होती है।।३१।।

१. पुण्यासंहितावक्तेति ख.। २. ब्राह्मणांस्ते वे वै वेति ख.।

तेन तप्तं हुतं तेन तेन जप्तं महत्तरम्।
पूजिता येन विप्रेशाः सत्यमेव नराधिप॥३२॥
आधिव्याधिभयं नैव भक्त्या यत्र द्विजार्चनम्।
यथा सर्वेषु देवेषु श्रेष्ठो वै गरुडध्वजः॥३३॥
वेदेषु च यथा साम शास्त्रे वेदान्त उच्यते।
पुरीणां च यथा काशी क्षेत्राणां परमं त्विदम्॥३४॥
हिमवान् पर्वतश्रेष्ठो यथा पशुषु धेनवः।
तथा सर्वपदार्थेषु ब्राह्मणाः परिकीर्त्तिताः॥३५॥
इह चैव परत्रापि ब्राह्मणास्तारकाः स्मृताः।
केचिदैहिककर्माणः केचित्परसुखप्रदाः॥३६॥
विप्रेतरो[1] महाभाग यदि शास्त्रविशारदः।
ब्राह्मणश्च तथा मूर्खस्तस्माच्छ्रेष्ठतमो मतः॥३७॥

---

हे नराधिप! जिसने ब्राह्मणों का पूजन किया है, उसी ने महान् तप किया है, उसी ने जप किया है, यह सत्य है।।३२।।

जहाँ पर ब्राह्मणों की पूजा होती है, वहाँ पर किसी प्रकार की आधि (मानसिक व्यथा), व्याधि (शारीरिक रोग) का भय नहीं रहता है। जिस प्रकार समस्त देवताओं में गरुडध्वज भगवान् विष्णु श्रेष्ठ हैं, वेदों में सामवेद और शास्त्रों में वेदान्तशास्त्र उत्कृष्ट कहा जाता हैं, जैसे पुरियों में काशी तथा अखिल क्षेत्रों में यह कुब्जाम्रक क्षेत्र परमश्रेष्ठ है।।३३-३४।।

जैसे पर्वतों में हिमालय श्रेष्ठ है, पशुओं में गाय श्रेष्ठ मानी गयी है, उसी प्रकार सभी प्राणियों में ब्राह्मण श्रेष्ठ कहा गया है।।३५।।

इस लोक तथा परलोक में ब्राह्मण ही उद्धार करने वाला है। कुछ तो सांसारिक कर्मों का साधन करने वाले होते हैं और कुछ परलोक में सुख देने वाले होते हैं।।३६।।

हे महाभाग! ब्राह्मणों के अतिरिक्त यदि कोई अन्य पुरुष सम्पूर्ण शास्त्रों का ज्ञाता है और ब्राह्मण निरा मूर्ख है; तो उस विद्वान् की अपेक्षा वह मूर्ख ब्राह्मण ही श्रेष्ठ माना गया है।।३७।।

---

१. 'विप्रेतर' इति ख.।

ब्राह्मणाँश्चैव सम्पूज्य यत्कर्म प्रकरोति हि।
अविधानात्कृतमपि सम्पूर्णं स्यादिति स्मृतिः॥३८॥
अपृष्ट्वा ब्राह्मणान् ये वै स्वयं कर्म प्रकुर्वते।
तत्कर्म निष्फलं ज्ञेयमायासेनापि यत्कृतम्॥३९॥
दम्भं करोति विप्रेषु विद्यायां यो नराधमः।
स याति नरकं घोरं यावदाभूतसम्प्लवम्॥४०॥
यो निन्दति महाराज ब्राह्मणं ब्रह्मतत्परम्।
कुलं तस्य क्षयं याति ततो नरकमाप्नुयात्॥४१॥
विद्यया जयते विप्रान् स वै नरकमश्नुते॥४२॥
ब्राह्मणार्थं यस्य वित्तं ब्राह्मणार्थं पराक्रमः।
स एव पुरुषो लोके पुण्यात्मा नात्र संशयः॥४३॥
चाण्डालीष्वपि सञ्जाता[१] ब्राह्मणानां हि वीर्यतः।
तेऽप्यवध्या महाराज किमु विद्वान् सुकर्मकृत्॥४४॥

---

ब्राह्मणों की पूजा करके जो कुछ कर्म किया जाता है, वह विधिहीन होने पर भी पूर्ण माना जाता है।।३८।।

जो व्यक्ति ब्राह्मणों से बिना पूछे स्वयं ही कर्म करता है, वह चाहे जितना परिश्रम से किया गया हो, उसे निष्फल ही समझना चाहिये।।३९।।

जो नराधम मनुष्य ब्राह्मणों के प्रति विद्याविषयक दम्भ करता है, वह मनुष्य प्रलयपर्यन्त घोर नरक में वास करता है।।४०।।

हे महाराज! जो पुरुष ब्रह्मविचार करने में तत्पर ब्राह्मण की निन्दा करता है, उसके कुल का सत्यानाश होता ही है, वह स्वयं मर कर नरक में जाता है।।४१।।

जो मनुष्य विद्या के द्वारा ब्राह्मणों पर विजय करता है, उसे नरक भोगना पड़ता है।।४२।।

जिस व्यक्ति का धन और पराक्रम ब्राह्मणों के ही निमित्त है, अर्थात् उनकी सहायता और उपकार के लिये है, निस्सन्देह उसी को लोक में पुण्यात्मा समझना चाहिये।।४३।।

हे महाराज! ब्राह्मणों के तेज से चाण्डाली में भी जिसका जन्म हुआ है, उनका भी तिरस्कार करने का निषेध किया गया है, ऐसी स्थिति में विद्वान् और श्रेष्ठ कर्म करने वालों का तो कहना ही क्या है।।४४।।

---

१. सञ्ज्ञातेति ख.।

पौलस्त्यपुत्रो भगवन् हतो यद्वै त्वया विभो।
रक्षणार्थं[१] ब्राह्मणानां गवां चैव महामते॥४५॥
अलेपस्यापि ते राम लक्ष्मणस्यापि पातकम्।
लोकानुवृत्तयेऽवश्यं कर्तव्यं पापसङ्क्षयम्॥४६॥
कुब्जाम्रकात्परं क्षेत्रं ब्रह्महत्यानिवारणम्।
नास्ति राघवशार्दूल पृथिव्यां पुण्यदं महत्॥४७॥
लक्ष्मणेन प्रगन्तव्यं त्वया तत्र महीपते॥४८॥

**।। इति श्रीस्कान्दे केदारखण्डे कुब्जाम्रकमाहात्म्ये ब्राह्मणप्रशंसा नाम द्वाविंशत्यधिकशततमोऽध्यायः ।।१२२।।**

---

हे सर्वव्यापक! हे भगवन्! आपने पुलस्त्यनन्दन वृद्धश्रवा के पुत्र रावण को ब्राह्मणों तथा गौओं की रक्षा के लिये मारा है।।४५।।

यद्यपि आपको तथा लक्ष्मण को पापों का स्पर्श नहीं हो सकता, तथापि लोकशिक्षा के लिये प्रायश्चित्त द्वारा पातक का मार्जन आपको अवश्य करना चाहिये।।४६।।

हे रघुकुलश्रेष्ठ! पृथिवी के ऊपर कुब्जाम्रक तीर्थ से बढ़कर ब्रह्महत्या का निवारण करने वाला तथा महत् पुण्यदायक कोई अन्य क्षेत्र नहीं है।।४७।।

हे महीपति! इसलिये आप और लक्ष्मण दोनों को ही वहाँ प्रायश्चित्त करने के लिये जाना चाहिये।।४८।।

**।। इस प्रकार श्रीस्कन्दमहापुराण के अन्तर्गत केदारखण्ड में एक सौ बाइस अध्याय पूर्ण हुआ।।१२२।।**

**[श्लोकसंख्या पूर्वागत-१०१६+४८=१०६४]**



---

१. रक्षार्थमिति ख.।

# अथ त्रयोविंशत्यधिकशततमोऽध्यायः

## कुब्जाम्रकतीर्थे रामलक्ष्मणयोस्तपश्चरणम्

स्कन्द उवाच

इत्युक्तो वै वसिष्ठेन रामो धर्मभृतां वरः।
कुब्जाम्रके महाक्षेत्रे जगाम च सहानुजैः॥१॥

नारद उवाच

लक्ष्मणेन तपस्तप्तं कथं कुब्जाम्रके महत्।
कस्मिन् प्रदेशे भगवन् कानि तीर्थानि तद्वद॥२॥
रामेणापि कृतं किं वा कस्मिन् क्षेत्रे कृतं तपः।
एतत्सर्वं समासेन कृपया वद मे प्रभो॥३॥

---

### कुब्जाम्रक तीर्थ में राम और लक्ष्मण की तपस्या

**स्कन्द जी ने कहा**

इस प्रकार वसिष्ठ जी के कहने पर धर्म के पालन करने वालों में श्रेष्ठ रामचन्द्र अपने छोटे भाइयों के साथ कुब्जाम्रक नामक महान् तीर्थ में गये।।१।।

**नारद ने कहा**

हे भगवान् कुब्जाम्रक में किस स्थान पर लक्ष्मण जी ने उग्र तप किया? वहाँ कौन से तीर्थ हैं, यह मुझसे बतलायें।।२।।

क्या रामचन्द्र जी ने भी तप किया था, तो उन्होंने किस क्षेत्र में तप किया था? हे प्रभो! यह सब वृत्तान्त संक्षेप में मुझसे कहें।।३।।

स्कन्द उवाच

सर्वं ते वच्मि विप्रेश महदज्ञाननाशनम्।
लक्ष्मणेन यथा तप्तं ब्रह्महत्यानिवारणम्।।४।।
रामेणापि परक्षेत्रे कृतं पापप्रणाशनम्।
भारापनुत्तये भूम्याः प्रार्थितस्य परात्मनः।
कृतदुष्टविनाशस्य रक्षणार्थं भवादृशाम्।।५।।
श्रीरामस्य महाबाहोर्लीलामानुषरूपिणः।
पुण्यपापादिकं चैव नैव दोषविकल्पना।।६।।
विशेषतोऽस्य पापस्य रावणस्य दुरात्मनः।
गोविप्रहन्तुर्विप्रेश मारणे नास्ति यद्यपि।।७।।
पातकं तदपि प्राज्ञ लोकचेष्टानुसारिणा।
प्रायश्चित्तं कृतं तेन लक्ष्मणेन च नारद।।८।।

---

**स्कन्द ने कहा**

हे विप्र! महान् अज्ञान को नष्ट करने वाला यह सम्पूर्ण आख्यान हम आपके प्रति वर्णन कर रहे हैं, जिस प्रकार लक्ष्मण ने ब्रह्महत्या की निवृत्ति करने के लिए तप किया था।।४।।

जिस प्रकार उस परम क्षेत्र में रामचन्द्र जी ने भी पाप का नाश किया था। भूमि का भार उतारने के लिए जिनकी प्रार्थना की गयी, इसलिए जिन परमात्मा ने दुष्टों का नाश किया है तथा आप जैसे सौम्यस्वभाव वाले महात्माओं की रक्षा करना ही उन दुष्टों के वध का कारण है।।५।।

जिन महाप्रभु ने अपनी लीला से ही नरदेह धारण किया है, उन महाबाहु श्रीरामचन्द्र जी को पुण्य-पाप का स्पर्श नहीं है तथा उनके लिए दोषों की आशंका भी नहीं करनी चाहिये।।६।।

हे विप्रेश! यद्यपि पापाचरणशील दुराचारी तथा गौ एवं ब्राह्मणों का हनन करने वाले रावण का वध करने में पाप लग ही नहीं सकता है।।७।।

हे प्राज्ञ नारद! तथापि लोक में प्रचलित व्यवहारों का पालन करने वाले राम और लक्ष्मण ने प्रायश्चित्त का आचरण किया।।८।।

कुब्जाम्रकोत्तरे भागे गव्यूत्यर्द्धे तथाऽर्द्धके।
क्रोशे गङ्गातटे पश्चान्नानामुनिगणान्विते॥९॥
अद्यापि तत्प्रदेशे हि लक्ष्मणस्यास्य रूपतः।
सर्परूपेण शेषांशो वर्त्तते भगवत्प्रियः॥१०॥
शिवमाराधयामास वर्षैर्द्वादशसङ्ख्यकैः।
निराहारो महातेजाः शिवसंन्यस्तमानसः॥११॥
जजाप परमां विद्यां षड्वर्णां भक्तितत्परः।
वाय्वाहारो वर्षशतं शतपत्रफलाशनः॥१२॥
तस्थावेकेन पादेन शिवभक्तो जितेन्द्रियः।
ततः शिवो महाभाग प्रत्यक्षं तस्य नारद॥१३॥
बभूव सहसा पुत्र कान्तिव्याप्तदिगन्तरः।
वृषसंस्थोऽर्द्धचन्द्रेण संशोभितललाटकः॥१४॥

---

कुब्जाम्रक के उत्तर भाग में तीन कोश की दूरी पर अनेक मुनियों से सेवित प्रसिद्ध गङ्गा जी का तट है।।९।।

आज भी उस प्रदेश में भगवान् विष्णु के प्रिय शेष के अंशावतार लक्ष्मण जी की मूर्ति सर्प रूप में विद्यमान है।।१०।।

महान् तेजशील लक्ष्मण जी ने बारह वर्षपर्यन्त निराहार रहकर भगवान् शिव में अपने मन को लगाकर उनकी आराधना की।।११।।

उन्होंने भक्ति में तत्पर होकर परम षडक्षर महामन्त्र का जप किया। उन्होंने सौ वर्षपर्यन्त शतपत्र (कमल) के फल (कमलगट्टा) का आहार लेकर एवं सौ वर्षों तक वायु का आहार लेकर जप करते रहे। तदनन्तर शिव की भक्ति में तत्पर लक्ष्मण इन्द्रियों का निग्रह कर एक पैर पर खड़े होकर तप करते रहे। हे महाभाग नारद! लक्ष्मण द्वारा इस प्रकार के उग्र तप करने के बाद भगवान् शङ्कर उनके सामने प्रत्यक्ष हुए।।१२-१३।।

उस समय उनकी कान्ति से दिग्दिगन्त व्याप्त हो गया। भगवान् शङ्कर स्वयं वृषभ पर आरूढ़ थे तथा अर्द्धचन्द्रमा के द्वारा उनका ललाट सुशोभित हो रहा था। उन्होंने व्याघ्रचर्म का परिधान और सर्पों का यज्ञोपवीत धारण किया

व्याघ्रचर्मपरीधानो व्यालयज्ञोपवीतवान्।
उमानीतार्द्धतनुकस्त्रिनेत्रो गजकृत्तिधृक्॥१५॥
उवाच वचनं तत्र सौमित्रिं मित्रवत्सलम्॥१६॥

श्रीशिव उवाच

साधु साधु महाभाग सुमित्रानन्दवर्द्धन।
गतं ते पातकं तेन मत्प्रसादेन लक्ष्मण॥१७॥
अस्मिन् क्षेत्रे सकृत्स्नानाद् ब्रह्महत्या त्रिकोटिभिः।
मुच्यन्ते किमु त्वं शुद्धो मुनिहिंसकहिंसकः॥१८॥
शुद्धस्त्वं सर्वपापेभ्यो देहजेभ्यो महाशय।
गच्छ गच्छ स्वके स्थाने कुरु राज्यं सुखानि च॥१९॥
गतो वै राजयक्ष्मा ते देहतः शुभगेहतः।
त्वन्नाम्नेदं पुण्यतमं लक्षितं वै भविष्यति॥२०॥

---

था। उनके आधे अङ्ग में पार्वती जी विराजमान थीं तथा उन त्रिनेत्रधारी ने गजराज के चर्म को भी धारण कर रखा था। इस प्रकार वहाँ उपस्थित होकर भगवान् शिव ने मित्रों के साथ वत्सलता का आचरण करने वाले लक्ष्मण से कहा।।१४-१६।।

**श्रीशिव ने कहा**

हे महाभाग! तुम सुमित्रा के आनन्द को बढ़ाने वाले हो, तुम धन्य हो, धन्य हो। हे लक्ष्मण! हमारी कृपा से तुम्हारे सम्पूर्ण पातक नष्ट हो गये हैं।।१७।।

इस क्षेत्र में स्नान करने से जब मनुष्य ब्रह्महत्या आदि तीन करोड़ पातकों से मुक्त हो जाता है, इस स्थिति में तुमने तो मुनि जन के विनाशकर्ता राक्षस का वध किया है, इसलिए तुम्हारी शुद्धि के लिए कहना ही क्या है, तुम स्वयं शुद्ध हो।।१८।।

हे महाशय! तुम देहज सम्पूर्ण पातकों से शुद्ध हो, अब तुम अपने स्थान को जाओ और राज्य तथा सुख का भोग करो।।१९।।

अब तुम्हारे देह से राजयक्ष्मा रोग भी दूर हो गया, अब यह क्षेत्र तुम्हारे ही नाम से विख्यात होगा।।२०।।

अहं च भगवन्नित्यं लक्ष्मणेश्वरतां गतः।
तिष्ठामि मुक्तिदो नृणामतिदुष्कृतिनां तथा॥२१॥

## लक्ष्मेश्वरस्य वर्णनम्

स्कन्द उवाच

इत्युक्त्वा च ततो दत्त्वा लक्ष्मणाय वरं तदा।
तत्रैवान्तर्दधे रुद्रो भक्तिगम्यो दुरासदः॥२२॥
सोऽपि लक्ष्मणनामा वै विष्णोरंशो महात्मनः।
स्थितवाँस्तत्र स्वांशेन पूर्णोऽपि प्रभुरच्युतः॥२३॥
तत्रैव वामभागे तु शिवो ज्ञानगतिः प्रभुः।
नाम्ना लक्ष्मेश्वरः ख्यातो दर्शनात्सर्वपापहा॥२४॥

## लक्ष्मणकुण्डस्य वर्णनम्

गङ्गायाः पश्चिमे तीरे यत्र सिन्दूरवर्णका।
मृत्तिका वर्त्तते विप्र तत्र लक्ष्मणकुण्डकम्॥२५॥

---

हे भगवान्! मैं भी यहाँ लक्ष्मणेश्वर नाम को प्राप्त करूँगा। मैं यहाँ पापी मनुष्यों को मुक्ति प्रदान करता हुआ निवास करूँगा।।२१।।

### लक्ष्मेश्वर शिव का वर्णन

**स्कन्द जी ने कहा**

यह कहकर लक्ष्मण जी को वर देकर भगवान् शिव उसी स्थान पर अन्तर्धान हो गये। वे रुद्र भक्ति के द्वारा ही प्राप्त किए जाते हैं, अन्य व्यक्तियों को उनकी प्राप्ति दुर्लभ है।।२२।।

वे भी महात्मा भगवान् श्रीविष्णु के अंश लक्ष्मण नाम से वहाँ स्थित हो गये। यद्यपि भगवान् अच्युत अपने अंशों से परिपूर्ण भी थे।।२३।।

उसी के वामभाग में ऐसे भगवान् शिव विद्यमान हैं, जिनकी प्राप्ति ज्ञान के द्वारा होती है। उनका लक्ष्मेश्वर (लक्ष्मणेश्वर) नाम प्रसिद्ध है। उनके दर्शन करने मात्र से शीघ्र ही पापों का विनाश हो जाता है।।२४।।

### लक्ष्मणकुण्ड का वर्णन

हे विप्र! गङ्गा के पश्चिमी तट पर जहाँ सिन्दूर के वर्ण की मिट्टी है, वहीं पर लक्ष्मणकुण्ड भी है।।२५।।

तत्र स्नात्वा च जप्त्वा च फलानन्त्यं लभेन्नरः।

## मुनिकुण्डस्य वर्णनम्

तत्र वामविभागे तु मुनिकुण्डमिति स्मृतम्।।२६।।
तत्र स्नात्वा शुभाँल्लोकान् प्राप्नोति परमं पदम्।
तत्र विष्णोर्गदा विप्र निहिता क्रुद्धचेतसा।।२७।।
विष्णुना वृत्रदमने तत्रास्ति चिह्नितं जले।

## इन्द्रकुण्डस्य वर्णनम्

इन्द्रकुण्डमिति ख्यातं तत्रैव भवमोचनम्।।२८।।
यत्रेन्द्रस्तपसा वृत्रं निजघान महामुने।

## वायुकुण्डस्य स्थितिः

तस्य वामे महत्तीर्थं वायुकुण्डमिति स्मृतम्।।२९।।

---

उस कुण्ड में स्नान करने एवं वहाँ मन्त्रों के जप करने से मनुष्य को सिद्धिरूप अनन्त फल की प्राप्ति होती है।

### मुनिकुण्ड का वर्णन

उसी के वामभाग में एक अन्य कुण्ड भी है, जिसका नाम मुनिकुण्ड रूप में प्रसिद्ध है।।२६।।

उसमें स्नान करने से शुभ लोकों एवं परम पद मोक्ष की प्राप्ति होती है। हे विप्र! वहाँ पर भगवान् विष्णु की एक गदा स्थापित है।।२७।।

उस गदा को क्रोधित विष्णु ने वृत्रासुर का वध करने में ग्रहण किया था। उसका चिह्न वहाँ आज भी जल में विद्यमान है।

### इन्द्रकुण्ड का वर्णन

वहीं पर इन्द्रकुण्ड भी प्रसिद्ध है, जो संसार के आवागमन को छुड़ाने वाला है।।२८।।

हे महामुनि! वहीं पर तप करने के प्रभाव से इन्द्र ने वृत्रासुर का वध किया था।

### वायुकुण्ड की स्थिति

उसके वामभाग में वायुकुण्ड नामक एक महान् तीर्थ है।।२९।।

स्नात्वा तत्र महाभाग शतगोदानजं फलम्।

## नन्दिशिलानन्दिकुण्डयोः स्थितिः

तस्मिन्नेव स्थले रम्ये स्थिता नन्दीशिला शुभा॥३०॥
स्पर्शमात्रेण यस्यास्तु मुच्यते सर्वपातकैः।
नन्दीकुण्डमिति ख्यातं सर्वतीर्थेषु चोत्तमम्॥३१॥

## धर्मेश्वरमहादेवस्य वर्णनम्

तत उत्तरदिग्भागे नाम्ना धर्मधराधरः।
धर्मधारेति विख्याता सर्वपापक्षयङ्करी॥३२॥
आयाति पर्वतश्रेष्ठाद्धर्माख्या धर्म्मवर्द्धिनी।
तस्यां स्नात्वा नरो भक्त्या वाजपेयफलं लभेत्॥३३॥
धर्मेश्वरो महादेवो वर्त्तते लिङ्गरूपधृक्।
यः स्नापयति लिङ्गं तन्मण्डलं भक्तितत्परः॥३४॥

---

हे महाभाग! उसमें स्नान करने से सौ गोदान करने का फल प्राप्त होता है।

### नन्दीशिला एवं नन्दीकुण्ड की स्थिति

उसी रमणीक स्थल में नन्दी नामक एक शिला है, जो अत्यन्त शुभ है।।३०।।

उसके केवल स्पर्श करने मात्र से मनुष्य सब पापों से मुक्त हो जाता है। वहीं नन्दीकुण्ड नाम का तीर्थ प्रसिद्ध है, यह भी सभी तीर्थों में उत्तम है।।३१।।

### धर्मेश्वर महादेव का वर्णन

उससे उत्तर दिशा की ओर धर्मधराधर नाम की धर्मधारा विख्यात है, वह समस्त पापों का विनाश करने वाली है।।३२।।

धर्म की वृद्धि करने वाली वह धारा धर्म नामक श्रेष्ठ पर्वत से आती है, उसमें भक्तिभावपूर्वक स्नान करने से मनुष्य को वाजपेय यज्ञ का फल प्राप्त होता है।।३३।।

वहाँ पर धर्मेश्वर महादेव लिङ्गरूप में विराजमान हैं। जो मनुष्य भक्ति में तत्पर होकर उस लिङ्ग को स्नान कराता है।।३४।।

सर्वान् कामानवाप्नोति जलदानेन नारद।

## माहेश्वरीक्षेत्रस्य स्थितिः

अथान्यच्च प्रवक्ष्यामि पीठं परमदुर्लभम्।।३५।।
यत्रैकरात्राल्लभते सिद्धिं परमदुर्लभाम्।
माहेश्वरीति विख्याता सर्वसिद्धिप्रदायिनी।।३६।।
यत्र रुद्रः स्वयं साक्षाद्देवैः सन्निहितः सदा।
माहेश्वरीति नाम्ना वै कृष्णवर्णा महामुने।।३७।।
तस्या वै दर्शनाद्याति रुद्रलोकं दुरासदम्।
आनागतीर्थतो विप्र तथा हैमवतीतटम्।।३८।।
मायाक्षेत्रमिदं ख्यातं सर्वक्षेत्रोत्तमोत्तमम्।
यस्यैकवारमपि यो दर्शनं प्रकरोति हि।।३९।।
कोटिजन्मकृतैः पापैर्मुच्यते नात्र संशयः।
धन्यानां वसतिर्ह्यत्र क्षेत्रराजे महामुने।।४०।।

---

हे नारद! जलदान करने से वह अपने सम्पूर्ण मनोरथों को प्राप्त कर लेता है।

## माहेश्वरी क्षेत्र की स्थिति

सम्प्रति मैं एक दूसरे परम दुर्लभ पीठ का वर्णन करता हूँ।।३५।।

जहाँ एक ही रात्रि में परम दुर्लभ सिद्धि की प्राप्ति होती है। समस्त सिद्धियों को देने वाले उस पीठ का नाम माहेश्वरी है।।३६।।

वहाँ साक्षात् स्वयं महादेव शङ्कर देवताओं सहित विद्यमान रहते हैं। हे महामुने! माहेश्वरी नाम से प्रसिद्ध वे देवी कृष्णवर्ण की हैं।।३७।।

उनके दर्शन करने से दुष्प्राप्य रुद्रलोक की प्राप्ति होती है। हे विप्र! नाग तीर्थ से प्रारम्भ कर हैमवती के तटपर्यन्त जो स्थान है, उसे मायाक्षेत्र कहते हैं, यह सभी क्षेत्रों में उत्तमोत्तम है। जो मनुष्य इस क्षेत्र का एक बार भी दर्शन करता है, नि:सन्देह वह करोड़ जन्म में किये पापों से भी मुक्ति प्राप्त कर लेता है। हे महामुनि! इस क्षेत्रराज में जिसे रहने का स्थान प्राप्त हुआ है, वह धन्य है।।३८-४०।।

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि।
अस्य क्षेत्रस्य माहात्म्यं को वा वर्णयितुं क्षमः।।४१।।
श्रीविष्णोर्यत्र सान्निध्यमीश्वरस्य तथैव च।
दक्षादिभिर्मुनिवरैः कृताः क्रतुवरा यतः।।४२।।
एतत्क्षेत्रसमं क्षेत्रं त्रिषु लोकेषु दुर्लभम्।
मृता यत्र महाभाग प्रयान्ति परमं पदम्।।४३।।
तिर्यग्योनिगताश्चापि तथा स्थावरतां गताः।
प्रयान्ति भवनं विष्णोस्त्यक्तदेहा महामते।।४४।।
शृणु विप्र पुरावृत्तं चित्रं परमकं तथा।
यथाऽत्र प्रवरस्थाने वृषव्याघ्रौ महामुने।।४५।।
ययतुः परमां सिद्धिं प्राप्ते चापरजन्मनि।
इतिहासमिमं श्रुत्वा सर्वपापैः प्रमुच्यते।।४६।।

---

सैकड़ों-करोड़ों कल्पों में भी पुनः उसका पुनर्जन्म नहीं होता है। इस क्षेत्र के माहात्म्य का वर्णन करने में कौन समर्थ हो सकता हैं; क्योंकि इस क्षेत्र में भगवान् श्रीविष्णु और भगवान् शिव की स्थिति है। दक्ष आदि श्रेष्ठ मुनियों ने इसी स्थान में श्रेष्ठ यज्ञों का अनुष्ठान किया था।।४१-४२।।

इसलिए इस क्षेत्र के समान अन्य क्षेत्र का होना तीनों लोकों में दुर्लभ है। हे महाभाग! इस क्षेत्र में प्राण का परित्याग करने वाले व्यक्ति परम पद मोक्ष को प्राप्त कर लेते हैं।।४३।।

चाहे वे कीट-पतङ्ग आदि की योनि में हों या वृक्ष आदि स्थावर योनि में ही क्यों न उत्पन्न हुए हों। हे महामते! इस क्षेत्र में देह का परित्याग करके वे सभी विष्णुलोक को चले जाते हैं।।४४।।

हे विप्र! इस सम्बन्ध में प्राचीनकाल का एक विचित्र आख्यान सुनो। हे महामुनि! इस परमोत्कृष्ट क्षेत्र में जिस प्रकार वृष और व्याघ्र अन्य जन्म प्राप्त होने पर परम सिद्धि को प्राप्त किये थे। इस इतिहास को श्रवण कर मनुष्य सम्पूर्ण पापों से छुटकारा प्राप्त कर लेता है।।४५-४६।।

## ब्रह्मदत्तवैश्यस्याख्यानम्

धर्मक्षेत्रे कुरुक्षेत्रे बभूव वणिजां वरः।
ब्रह्मदत्त इति ख्यातः कुबेर इव चापरः॥४७॥
एकदा स महाभाग! शकटे स्थाप्य द्रव्यकम्।
सुवर्णमुक्तारत्नानि प्रवालानि च नारद॥४८॥
तीर्थयात्राप्रसङ्गेन दैवात्कुब्जाम्रके ययौ।
व्यापाराश्च कृतास्तेन तीर्थयात्रा च वै तथा॥४९॥
ब्रह्मदत्तस्य गेहे तु गत एको वृषस्तदा।
सार्थाच्चैव परिभ्रष्टो भूयः कुब्जाम्रकं ययौ॥५०॥
देवालयसमीपे तु स्थितवान् कतिचित्समाः।
निर्माल्यफलपत्राणि भक्षयन् वृषभो मुने॥५१॥
दिने स्वयं वनं याति रात्रावायाति तत्र वै।
एवं हि वसतस्तस्य तत्र देवगृहाद्बहिः।
व्याघ्रश्चैको रिपुर्जातो दृष्ट्वा पुष्टशरीरकम्॥५२॥

---

### ब्रह्मदत्त वैश्य का आख्यान

धर्म के उत्पत्तिरूप कुरुक्षेत्र में ब्रह्मदत्त नाम का एक श्रेष्ठ वैश्य था, वह दूसरे कुबेर के समान धनाढ्य था।।४७।।

हे महाभाग नारद! एक समय वह वैश्य गाड़ी में प्रभूत धन, सुवर्ण, मोती, रत्न और मूँगा को लाद लिया।।४८।।

दैवयोग के कारण तीर्थयात्रा के प्रसङ्ग में वह कुब्जाम्रक तीर्थ में गया, वहाँ उसने तीर्थयात्रा तो की ही, व्यापार भी करने लगा।।४९।।

इस क्रम में ब्रह्मदत्त के घर कोई एक बैल था, जो सार्थ (व्यापारी) से विछुड़ कर दूर कुब्जाम्रक में चला आया था।।५०।।

हे मुनि! वह वृषभ कुछ वर्षों तक देवमन्दिर के निकट स्थित रहा और मन्दिर के निर्माल्य फल और पत्रों का भक्षण करता था।।५१।।

वह दिन में तो जङ्गल में चला जाता और रात्रि में वहाँ आ जाता था। इस प्रकार देवमन्दिर के बाहर निवास करते-करते उसके शरीर को पुष्ट देखकर कोई व्याघ्र उसका शत्रु बन गया।।५२।।

तत्प्रसङ्गाच्च तत्रैव समायाति जिघाँसया।
एवं तयोर्महद्वैरं बभूव मुनिपुङ्गव॥५३॥
वृषभः सोऽपि पुष्टाङ्गो न तं गणयति ध्रुवम्।
तीक्ष्णशृङ्गो महोच्चो वै ककुद्वान् दृढविक्रमः॥५४॥
सहसा सोऽपि व्याघ्रश्च वृषभं न जिघांसति।
एकदा मुनिशार्दूल गतोऽरण्ये महावृषः॥५५॥
तृणानि खादितुं विप्र निर्जनेऽतिभयङ्करे।
महावराहसञ्छन्ने सरीसृपनिषेविते॥५६॥
व्याघ्रऋक्षशताकीर्णे दुर्गमे खड्गसेविते।
तयोर्युद्धं समभवन्महद् वृषभव्याघ्रयोः॥५७॥
वृषश्च तं महाभाग शृङ्गाभ्यां व्याघ्रकं तदा।
दधार च तथा भूमौ चिक्षेप प्रबलं खलु॥५८॥
उत्थाय सहसा सोऽपि वृषं कष्टाज्जघान ह।
सोऽपि सिंहो महातेजा आविद्धो वृषभेण ह॥५९॥

---

इसी प्रसङ्ग में उसको मारने की कामना से वह व्याघ्र नित्य वहाँ आता था। हे मुनिपुङ्गव! इस प्रकार दोनों का परस्पर वैर बहुत अधिक बढ़ गया।।५३।।

बैल का शरीर भी अत्यन्त पुष्ट था, अत एव वह उस व्याघ्र को कुछ नहीं समझता था। उस वृषभ के शृङ्ग तीक्ष्ण और ऊँचे-ऊँचे कन्धे थे और वह महान् पराक्रमी था।।५४।।

इसलिए वह व्याघ्र भी उस वृषभ को सहसा मारने की इच्छा नहीं करता था। हे मुनिश्रेष्ठ! एक समय वह महावृषभ घास चरने के लिए अति भयङ्कर घोर जङ्गल में चला गया। वह जङ्गल अनेक सूकरों और सर्पों से व्याप्त था, सैकड़ों व्याघ्र और भालुओं से व्याप्त था, उसमें भयङ्कर गैंड़े भी भरे पड़े थे। इस प्रकार के भयङ्कर वन में उन दोनों महावृषभ और व्याघ्र का घोर युद्ध हुआ। हे महाभाग! वृषभ ने उस व्याघ्र को अपने दोनों सींगों से उठाकर बलपूर्वक भूमि पर पटक दिया।।५५-५८।।

उठकर उस सिंह ने भी बड़ी कठिनाई से उस बैल को मार डाला; किन्तु वह महातेजस्वी सिंह भी उस बैल के द्वारा सींगों से छेद दिया गया।।५९।।

ममार च महाभाग तस्मिन् कुब्जाम्रके वने।
अवन्तीविषये तौ च कुब्जाम्रमृतिवैभवात्॥६०॥
पितापुत्रौ राजपुत्रौ बभूवतुरनिन्दितौ।
पूर्वजन्मविरोधेन जातौ तत्र विरोधिनौ॥६१॥
वृषो राजा बभूवाथ सिंहो वै राजपुत्रकः।
एकपुत्रस्तदा राजा किञ्चित्पुत्रं न भाषते॥६२॥
सोऽपि राजकुमारश्च राजानं न च पश्यति।
प्रजायाश्चानुरोधेन कुमारं च जिघांसति॥६३॥
राजा स्मरति वृत्तान्तं पूर्वजन्मभवं खलु।
इति तयोर्महाभाग दैवयोगादभून्मतिः॥६४॥
कुब्जाम्रकं महातीर्थं गन्तुं राज्ञो महात्मनः।
स कुमारो महाराजो निजधाम्नः[१] पदैर्युतः॥६५॥
ययौ हिमाद्रिनिकटे मायापुर्यां महामते।
यावत्प्रविशते राजा कुब्जाम्रक्षेत्र उत्तमे॥६६॥

---

हे महाभाग! इस प्रकार उस कुब्जाम्रक वन में वे दोनों एक-दूसरे को मार डाले। कुब्जाम्रक तीर्थ में मरने के कारण वे दोनों अवन्ती देश में प्रशंसनीय राजपुत्र पिता-पुत्र बने। इनमें बैल राजा और सिंह राजकुमार के रूप में उत्पन्न हुए थे; परन्तु पूर्व जन्म के विरोध के कारण वे वहाँ भी परस्पर विरोधी बन गये। यद्यपि राजा को एक ही पुत्र था, तथापि वह अपने पुत्र से कुछ नहीं बोलता था।।६०-६२।।

इसी प्रकार वह राजकुमार भी राजा को देखता तक नहीं था। पूर्वजन्म के वृत्तान्त का स्मरण करने से और प्रजा के अनुरोध से राजा उस पुत्र को मारना चाहता था।।६३।।

हे महाभाग! राजा पूर्वजन्म के वृत्तान्त का स्मरण करता था। इसी क्रम में दैवयोग से कुब्जाम्रक तीर्थ में उन दोनों का जाने का विचार हुआ।।६४।।

हे महामति! वह राजकुमार और राजा दोनों ही अपने भवन से पैदल चलकर हिमालय पर्वत के निकट मायापुरी में गये।।६५।।

जहाँ अनेक मुनिजन विराजमान थे, देवता और गन्धर्व जिनकी सेवा कर रहे थे, जो समस्त क्षेत्रों में उत्तम था, इस प्रकार के कुब्जाम्रक क्षेत्र में राजा

---

१. निजधानेति ख.।

नानामुनिगणाकीर्णे देवगन्धर्वसेविते।
तावत्सस्मार पुत्रोऽपि वृत्तान्तं पूर्वसम्भवम्॥६७॥
वैरस्य कारणं स्वस्य राज्ञश्चैव महामते।
तस्मिन्नेव क्षणे तौ च निर्वैरौ हि बभूवतुः॥६८॥
क्षेत्रस्यास्य प्रभावेण शुद्धौ चैव तथा मुने।
तत्रैव स्थितवन्तौ च किञ्चित्कालं महामती॥६९॥
कालेन व्ययमापन्नौ यत्र गत्वा न शोचति।
इति वै परमाश्चर्यं मृगेन्द्रवृषयोर्वने॥७०॥
तिर्यग्योनिप्रगतयोर्मूढयोर्बद्धवैरयोः।
राज्यं चैव तथा प्राप्तं मोक्षश्चापरजन्मनि॥७१॥
कुब्जाम्रके मृतो विप्र विप्रहत्यायुतोऽपि वा।
मोक्षं प्राप्नोति सततं कुष्ठी वा मृतसन्ततिः॥७२॥

---

ने जैसे ही प्रवेश किया। हे महामति! उसी समय राजा के साथ राजकुमार को भी अपने पूर्वजन्म के अर्जित वृत्तान्त का स्मरण हो आया।।६६-६७।।

राजा के साथ अपने वैर के कारण का स्मरण हो आया। हे मुनि! उसी समय दोनों का वैर दूर हो गया और वे दोनों ही इस क्षेत्र के प्रभाव से वैर-रहित हो गये।।६८।।

इस क्षेत्र के प्रभाव से वे दोनों शुद्ध हो गये। वे दोनों महाबुद्धिमान् उसी स्थान में कुछ कालपर्यन्त स्थित रहे।।६९।।

समयानुसार मृत्यु को प्राप्त होकर वे दोनों उस स्थान को चले गये, जहाँ जाकर मनुष्य शोकग्रस्त नहीं होता है। इस प्रकार पशुयोनि में जन्म लेने वाले मूढमति होने के कारण परस्पर वैर करने वाले सिंह और वृष दोनों का वैर वन में हुआ था। इस प्रकार उन्हें राज्य की प्राप्ति हुई और अन्य जन्म में मुक्ति का लाभ हुआ।।७०-७१।।

हे विप्र! कुब्जाम्रक तीर्थ में मृत्यु को प्राप्त करने वाला व्यक्ति चाहे वह ब्रह्महत्यारा हो या कुष्ठरोगग्रस्त हो अथवा मृतसन्तति हो, सभी प्रकार के लोग मोक्ष को प्राप्त कर लेते हैं।।७२।।

## वाराहतीर्थस्य वर्णनम्

अथान्यच्चात्र परमं तीर्थं वाराहसंज्ञितम्।
धरण्या यत्र नियतं संस्तुतो भगवानजः॥७३॥
तस्मादिदं परं क्षेत्रं वाराहं नाम विश्रुतम्।
यत्र ब्रह्मादयो देवास्तपस्तेपुः सुदारुणम्॥७४॥
वाराहतीर्थमहिमा केन वर्णयितुं क्षमः।
तत्रैका परमा मूर्त्तिः शिलारूपा महात्मनः॥७५॥

## सूर्यपुत्र्या वृत्तान्तम्

तच्छिलास्पर्शनादेव विष्णुलोके वसेच्चिरम्।
सूर्यपुत्री नदी तत्र समायाति महामते॥७६॥
गालवेन पुरा सूर्यः समाराधित ईश्वरः।
प्रसन्नश्चाब्रवीत्सूर्यो वरं वरय गालव॥७७॥

---

### वाराह तीर्थ का वर्णन

इसके अनन्तर यहाँ एक अन्य वाराह नामक तीर्थ है, इसी तीर्थ में पृथिवी ने अजन्मा भगवान् विष्णु की स्तुति की थी।।७३।।

इसी कारण इस उत्तम क्षेत्र का वाराह नाम विख्यात हुआ है तथा इसी स्थान में ब्रह्मा आदि देवताओं ने कठोर तपस्या का अनुष्ठान किया था।।७४।।

इस वाराहतीर्थ की महिमा का वर्णन करने में कौन समर्थ हो सकता है। वहाँ भगवान् की एक महामूर्ति शिलारूप में विद्यमान है।।७५।।

### सूर्यपुत्री का वृत्तान्त

उस शिला का केवल स्पर्श करने मात्र से ही मनुष्य चिरकालपर्यन्त विष्णुलोक में निवास करता है। हे महामतिमान्! वहाँ सूर्य की पुत्री यमुना नदी के रूप में आती है।।७६।।

प्राचीनकाल में गालव ऋषि ने सूर्य नारायण की आराधना की थी, जिससे प्रसन्न होकर सूर्य ने कहा कि हे गालव! वर की याचना करो।।७७।।

सोऽब्रवीद्देहि भगवँस्तव पुत्री तु या स्मृता।
यमुनेति समाख्याता नदी परमपावनी॥७८॥
सा समायातु सततं गङ्गायां सङ्गता भवेत्।
तीर्थराजप्रयागाच्च समं तीर्थं भवत्विति॥७९॥
अत्र स्नास्यन्ति ये मर्त्यास्ते प्रयान्तु परं पदम्।
तव चात्र स्थितिश्चास्तु सर्वतीर्थेषु चोत्तमे॥८०॥
सूर्यश्चापि तथेत्युक्त्वा ददौ वरमनुत्तमम्।
यमुना च महाभाग कलया चात्र संस्थिता॥८१॥
तस्यास्तु सङ्गमे पुण्ये प्रयागात्कोटिसङ्ख्यके।
स्नात्वा तत्र नरो भक्त्या शिवसायुज्यमाप्नुयात्॥८२॥

## सूर्यकुण्डस्य स्थितिः

तत्रैव सूर्यकुण्डाख्यं तीर्थं परमपावनम्।
यस्य संस्पर्शनादेव सूर्यलोके महीयते॥८३॥

---

तदनन्तर उन्होंने कहा—हे भगवन्! आपकी परमपावनी पुत्री यमुना नाम वाली है, उसे मुझे प्रदान करें।।७८।।

वह नदी के रूप में यहाँ आकर नित्य गङ्गा में मिलती रहे, इसलिए यह तीर्थ तीर्थराज प्रयाग के समान पुण्यप्रद हो।।७९।।

जो मनुष्य इसमें स्नान करेंगे, उन्हें परम पद मोक्ष की प्राप्ति होनी चाहिये। सभी तीर्थों में उत्तम इस तीर्थ में आपकी भी निरन्तर स्थिति होनी चाहिये।।८०।।

'ऐसा ही हो' यह कहकर सूर्य ने भी उत्तम वर प्रदान कर दिया। हे महाभाग! यमुना भी यहाँ अपनी एक कला मात्र से स्थित रहती है।।८१।।

प्रयाग की अपेक्षा करोड़ गुना अधिक फल प्रदान करने वाले उसके पवित्र सङ्गम में भक्तिभावपूर्वक स्नान करने वाले मनुष्य को भगवान् शिव का सायुज्य प्राप्त होता है।।८२।।

## सूर्यकुण्ड की स्थिति

वहीं पर सूर्यकुण्ड नामक परम पवित्र एक अन्य तीर्थ है, उसका केवल स्पर्श करने मात्र से ही सूर्यलोक में ऐश्वर्य भोगने को मिलता है।।८३।।

तत्रैव पश्चिमे भागे तीर्थं गालवसंज्ञितम्।
यत्र स्नानात्परं याति पुनरावृत्तिवर्जितम्॥८४॥
तत उत्तरवायव्ये शिवो यज्ञेश्वरः प्रभुः।
विष्णुना स्थापितो यत्र यज्ञादौ विघ्ननाशने॥८५॥

## हृषीकेशक्षेत्रस्य वर्णनम्

यत्र विष्णुश्चक्ररूपी तत्रेदं लिङ्गमुत्तमम्।
इदं परमकं पीठं सर्वसिद्धिकरं नृणाम्॥८६॥
यत्रार्चया सकृदपि लभते यद्यदिच्छति।
तस्य वामप्रदेशे हि शिला विष्णुकलेवरा॥८७॥
यस्यां कृते हृषीकेशस्त्रेतायां भरतो हरिः।
द्वापरे वामनो देवो भूयश्च भरतः कलौ॥८८॥

---

उसी के पश्चिम भाग में गालव नाम का एक तीर्थ है, उसमें स्नान करने से ऐसे लोक की प्राप्ति होती है, जहाँ से पुनः लौटना नहीं पड़ता है।।८४।।

वहाँ से उत्तर ओर वायुकोण में सर्वशक्तिमान् यज्ञेश्वर भगवान् शिव विद्यमान हैं, यज्ञ के प्रारम्भ में श्रीविष्णु ने विघ्नों को विनष्ट करने के लिए उनकी स्थापना की थी।।८५।।

### हृषीकेश क्षेत्र का वर्णन

जहाँ पर भगवान् विष्णु चक्ररूप में स्थित हैं, वहीं पर भगवान् शिव उत्तम लिङ्गरूप में विद्यमान हैं, यह परम श्रेष्ठ पीठ मनुष्यों की सम्पूर्ण सिद्धियों को देने वाला है।।८६।।

वहाँ एक बार भी पूजन करने से मनुष्य जो-जो अभिलाषा करता है, उसकी प्राप्ति हो जाती है। उसी के वामभाग में विष्णु के शरीर के रूप में एक शिला है।।८७।।

जिस शिला में भगवान् विष्णु सत्ययुग में हृषीकेश के रूप में, त्रेतायुग में भरत के रूप में, द्वापर में वामन के रूप में एवं पुनः कलियुग में भरत के रूप में स्थित हैं।।८८।।

तस्य सन्दर्शनादेव महापातककोटयः।
नश्यन्ति ब्राह्मणश्रेष्ठ सिद्ध्यन्ति सर्वसिद्धयः॥८९॥
एतन्नाम्नैव सकलं प्राप्नोति निजवाञ्छितम्।
इति ते कथितं देव माहात्म्यं जगदीशितुः॥९०॥
हृषीकेशाश्रमे पुण्ये यथा रैभ्यो ह्यनुग्रहम्।
कुब्जाम्रकस्य माहात्म्यं यः शृणोति महामते॥९१॥
सोऽपि वैकुण्ठनिलये याति ब्रह्मसनातनम्।
मोदते त्रिदिवैस्सार्द्धं पितृभिः सह नारद॥९२॥
अस्य क्षेत्रस्य महिमा न वक्तुं केन[1] शक्यते।
सङ्क्षेपेण मयाऽऽख्यातं पापघ्नं सर्वकामदम्॥९३॥

---

हे ब्राह्मणश्रेष्ठ! उस शिला के केवल दर्शन करने से ही करोड़ों महापातक नष्ट हो जाते हैं और सभी प्रकार की सिद्धियाँ प्राप्त हो जाती हैं।।८९।।

इसका केवल नाम लेने मात्र से ही मनुष्य अपनी इच्छित वस्तु को प्राप्त कर लेता है। हे भूदेव! इस प्रकार हमने आपसे भगवान् जगदीश्वर के माहात्म्य का कथन किया।।९०।।

इस पुण्यशाली हृषीकेश के आश्रम में जिस प्रकार रैभ्य को ईश्वर के अनुग्रह की प्राप्ति हुई थी। हे महामति! जो मनुष्य कुब्जाम्रक क्षेत्र के माहात्म्य को सुनता है।।९१।।

वह मनुष्य भी वैकुण्ठ लोक में सनातन भगवान् श्रीविष्णु को प्राप्त हो जाता है। हे नारद! वह मनुष्य अपने पितरों के साथ वहाँ जाकर देवताओं के साथ आनन्द को प्राप्त करता है।।९२।।

इस क्षेत्र की महिमा का वर्णन करने में कोई समर्थ नहीं हो सकता है, मैंने संक्षेप में ही पापों का नाश करने वाले और सम्पूर्ण कामनाओं को प्रदान करने वाले इस क्षेत्र का आख्यान वर्णन किया है।।९३।।

---

१. केनापीति क.।

य इदं पठति श्राद्धे शृणोति च महामते।
तारिताः पितरस्तेन सत्यमेव न संशयः॥९४॥

**।। इति श्रीस्कान्दे केदारखण्डे मायाक्षेत्रमाहात्म्ये कुब्जाम्रकमाहात्म्यवर्णनं नाम त्रयोविंशत्यधिकशततमोऽध्यायः ।।१२३।।**

---

हे महामतिमान्! जो मनुष्य इस क्षेत्र के माहात्म्य को श्राद्धकाल में पढ़ता है, अथवा श्रवण करता है, निश्चित रूप से उसने अपने पितरों का उद्धार कर दिया, इसमें कुछ भी सन्देह नहीं है।।९४।।

**।। इस प्रकार श्रीस्कन्दपुराण के अन्तर्गत केदारखण्ड में एक सौ तेइस अध्याय पूर्ण हुआ।।१२३।।**

**[श्लोकसंख्या पूर्वागत-१०६४+९४=११५८]**



# अथ चतुर्विंशत्यधिकशततमोऽध्यायः

## रामाश्रमस्य वर्णनम्

नारद उवाच

अथान्यद्वद माहात्म्यं क्षेत्राणां हिमपर्वते।
श्रोतुकामोऽस्मि भगवन् कृपां कुरु दयानिधे॥१॥
कुत्र तप्तं हि रामेण तपः परमदारुणम्।
यस्मात्पौलस्त्यवधजातात् पाताकान्मुक्त ईश्वरः॥२॥
कुत्र तद्वै महाक्षेत्रं कैलासे पर्वतोत्तमे।
यत्र ब्रह्मादिदेवानां वसतिर्नित्यमेव हि॥३॥

स्कन्द उवाच

साधु पृष्टं त्वया विप्र कथयामि तवानघ।
यस्य सन्दर्शनादेव मुच्यते सर्वपातकैः॥४॥

---

### रामाश्रम का वर्णन

**नारद ने कहा**

हे भगवन्! हिमालय के ऊपर अन्य भी जितने क्षेत्र हैं, उनके माहात्म्य का वर्णन करें। हे दयानिधान! मैं सुनने की इच्छा करता हूँ, इसलिए मुझ पर कृपा करें।।१।।

श्रीरामचन्द्र ने परम दारुण तप कहाँ किया था, जिसके आचरण से वे पौलस्त्य के पुत्र रावण के वधजनित पाप से स्वयं मुक्त हुए थे।।२।।

सभी पर्वतों में उत्तम कैलास पर्वत के ऊपर वह स्थान कहाँ है? जहाँ ब्रह्मा आदि देवताओं का नित्य निवास है।।३।।

**स्कन्द जी ने कहा**

हे निष्पाप, विप्र! तुमने उत्तम प्रश्न किया है, मैं उसे तुमसे कह रहा हूँ, जिसके दर्शन करने मात्र से ही मनुष्य सभी पापों से मुक्त हो जाता है।।४।।

गङ्गाद्वारादुत्तरेऽस्मिन् भागे वायव्यमाश्रिते।
रामाश्रम[१] इति ख्यातो माने षोडशयोजने॥५॥
धेनुपर्वतमारभ्य यावद्वेत्रवती नदी।
तावत्क्षेत्रं विजानीयात्पापघ्नं सर्वकामदम्॥६॥
तत्र रम्या नदी श्रेष्ठा कालिकेति परिश्रुता।
यस्यां स्नात्वा नरो याति ब्रह्मलोके न संशयः॥७॥
यत्र विष्णुः स्वयं साक्षान्नित्यं सन्निहितः प्रभुः।
यत्र चण्डी च दुर्गा च पूर्वपश्चिमयोः स्थिते॥८॥
घण्टाकर्णो यत्र पुरा शिवमाराधयच्छुचिः।
गणत्वं प्राप विभुतः शिवसान्निध्यसंस्थितः॥९॥
ततः पश्चिमतो लिङ्गं भूतेश इति कीर्त्तितम्।
तत्र गत्वा नरो विप्र जपन् पञ्चाक्षरं मनुम्॥१०॥

---

गङ्गाद्वार से उत्तर और वायव्य की ओर रामाश्रम नाम का एक तीर्थ विख्यात है, जो प्रमाण में सोलह योजन अर्थात् चौंसठ कोश विस्तृत है।।५।।

धेनुपर्वत से प्रारम्भ करके वेत्रवती नदीपर्यन्त इस रामक्षेत्र का प्रमाण जानना चाहिये। यह क्षेत्र पापों का विनाश करने वाला एवं सम्पूर्ण कामनाओं को पूर्ण करने वाला बताया गया है।।६।।

वहाँ परम मनोरम एक श्रेष्ठ नदी है, जो कालिका नाम से परिश्रुत है, जिसमें स्नान करने से मनुष्य ब्रह्मलोक में चला जाता है, इसमें संशय नहीं है।।७।।

वहाँ सर्वशक्तिमान् भगवान् श्रीविष्णु नित्य उपस्थित रहते हैं, उनके पूर्वभाग में चण्डी एवं पश्चिम भाग में दुर्गा जी स्थित हैं।।८।।

प्राचीनकाल में वहाँ परम पवित्रतापूर्वक घण्टाकर्ण ने भगवान् शिव की आराधना की थी, जिससे उन्होंने भगवान् शिव के गणत्व को प्राप्त किया, इसलिए वे शिव की सन्निधि में सदा स्थित रहते हैं।।९।।

उस क्षेत्र से पश्चिम की ओर भूतेश नाम का एक प्रसिद्ध लिङ्ग है। वहाँ जाकर जो मनुष्य पञ्चाक्षर मन्त्र का जप करता है।।१०।।

---

१. रामाश्रय इति ख.।

पश्यति प्रभुमीशानं त्रिरात्रेण न संशयः।
कुहूनाम्नी नदी तत्र सर्वपापप्रमोचिनी॥११॥
तस्या जलस्य संस्पर्शान्मुच्यते पापकञ्चुकात्।
तत्रैका शिवदा नाम्नी शिला परमपावनी॥१२॥
तत्र पिण्डप्रदानेन गयाश्राद्धफलं लभेत्।
तदधः पीतवर्णं तु जलं निस्सरति ध्रुवम्॥१३॥
तस्य स्पर्शनमात्रेण शिवलोके महीयते।
तत्रैलापत्रको नागः शिवमस्तकभूषणः॥१४॥
वर्त्तते शिवसंन्यस्तमानसो भक्तिसंयुतः।
तस्माद्वामप्रदेशे हि गुहा परमगह्वरा॥१५॥
विंशद्योजनविस्तीर्णा[1] नानामुनिगणान्विता।
जाबालिर्गालवश्चैव मार्कण्डेयो महामनाः॥१६॥

---

उस मनुष्य को तीन रात्रि में ही भगवान् शिव का दर्शन प्राप्त हो जाता है। वहाँ पर समस्त पापों को नष्ट करने वाली कुहू नाम की एक नदी है।।११।।

उसके जल का स्पर्श करने से मनुष्य समस्त पापों (के आवरण) से मुक्त हो जाता है। वहीं पर शिवदा नाम की एक परम पवित्र शिला है।।१२।।

वहाँ पितरों को पिण्ड प्रदान करने से मनुष्य गया में किये गये श्राद्ध का फल प्राप्त कर लेता है। उस शिला के नीचे से पीले रंग का जल निकलता रहता है, उस जल के केवल स्पर्श करने से ही शिवलोक में ऐश्वर्य का उपभोग करने का फल प्राप्त होता है।।१३-१४।।

वहाँ एलापत्र नामक नाग महादेव शङ्कर के मस्तक का भूषण बना रहता है। वह भी भक्तिभावपूर्वक भगवान् शङ्कर में अपने चित्त को लगाये रहता है। उसके वामभाग में अतीव गहन एक गुहा है।।१५।।

वह बीस योजन विस्तृत है तथा वह अनेक मुनिगण से संयुक्त है। वहाँ पर जाबालि, गालव, महामनस्वी मार्कण्डेय, महातेजस्वी च्यवन, भार्गव, अङ्गिरा,

---

१. त्रिंशद्योजनविस्तीर्णेति ग.।

च्यवनश्च महातेजा भृगुपुत्रोऽङ्गिरा मनुः।
एते चाऽन्ये च बहवो मुनयस्तप्तुमाश्रिताः॥१७॥

## सीताकुण्डस्य स्थितिः

तस्या वै दक्षिणे भागे सीताकुण्डमिति श्रुतम्।
यत्र सीता च रामेण सहासीत्तप आस्थिता॥१८॥
तत्र स्नानेन दानेन याति स्वर्गं न संशयः।

## हनुमत्कुण्डस्य स्थितिः

रामकुण्डात्पूर्वभागे सीताकुण्डाच्च दक्षतः॥१९॥
हनुमत्कुण्डमाख्यातं रुद्रलोकप्रदायकम्।
तत्र वै कपिरूपेण हनुमान्नित्यमाश्रितः॥२०॥
सर्वपापविनिर्मुक्तः पश्यतीमं महामतिः।
ततः पारे महादुर्गा कोटरे पर्वतस्य वै॥२१॥
तत्र स्थित्वा कदाचिद्धि जपेच्च शिवमन्त्रकम्।
सर्वसिद्धिमवाप्नोति दुष्प्राप्यां योगिनामपि॥२२॥

---

मनु आदि स्थित रहते हैं। इनके अतिरिक्त भी अन्य बहुत से महर्षिगण वहाँ तप करने के लिए उपस्थित रहते हैं।।१६-१७।।

### सीताकुण्ड की स्थिति

उसके दक्षिणभाग में सीताकुण्ड प्रसिद्ध है। जहाँ पर सीता जी तप करने के लिए रामचन्द्र जी के साथ उपस्थित हुई थीं। उस सीताकुण्ड में स्नान करने एवं वहाँ दान करने से मनुष्य स्वर्गलोक में चला जाता है, इसमें किसी प्रकार का संशय नहीं है।।१८-१९।।

### हनुमत्कुण्ड की स्थिति

रामकुण्ड से पूर्वभाग में एवं सीताकुण्ड से दक्षिण की ओर प्रसिद्ध हनुमत्कुण्ड है, जो रुद्रलोक को प्रदान करने वाला है। वहाँ पर हनुमान् जी वानर रूप में नित्य उपस्थित रहते हैं।।२०।।

जिसके सम्पूर्ण पाप दूर हो गये हैं, वही महामतिमान् मनुष्य उनका दर्शन कर पाता है। उसके आगे पर्वत की गुफा में महादुर्गा हैं।।२१।।

वहाँ स्थित रहकर जो मनुष्य शिव के मन्त्र का जप करता है, उसे उन सम्पूर्ण सिद्धियों की प्राप्ति होती है, जो योगियों को भी दुष्प्राप्य है।।२२।।

भाद्रकृष्णचतुर्दश्यां तत्रायान्ति सहस्त्रशः।
योगिन्यश्चार्द्धरात्रे हि नानाकृतिविभूषणाः॥२३॥
श्रूयते च ततः शब्दो गीतस्ताभिश्च[1] तत्र वै।
श्रुत्वाऽऽदरसमायुक्तो ह्रियते च ततः क्षणात्॥२४॥
वाद्यानि चैव श्रूयन्ते कार्त्तिके बलिराजके।
पातालाद् बलिराजोऽपि तत्राऽऽयाति महामते॥२५॥
बलिराजे तत्र योऽपि सम्पूजयति चाम्बिकाम्।
तस्मै सर्वं महेशानी ददाति शुभवाञ्छितम्॥२६॥
तत्र दुर्गेश्वरो देवो लिङ्गरूपी महार्थदः।
तत्र पार्श्वे महच्छ्वभ्रं तत्र दीपेश्वरी शिवा॥२७॥
तां कदाचिद्दैवयोगात्पश्यते यदि मानवः।
प्राप्नोति परमां सिद्धिं योगिनामपि दुर्लभाम्॥२८॥

---

भाद्रपद मास की कृष्णपक्ष की चतुर्दशी को अर्धरात्रि के समय अनेक प्रकार की आकृति और आभूषणों को धारण करके हजारों योगिनियाँ वहाँ आती हैं॥२३॥

उनके द्वारा गान किया गया गीत वहाँ श्रवणगोचर होता है, आदरपूर्वक उसका श्रवण करने से मनुष्य तत्काल ही मोहित हो जाता है॥२४॥

कार्तिक में बलिराज दिवस (देवोत्थान के दिन) में अनेक वाद्यों का शब्द श्रवणगोचर होता है। हे मतिमान्! उस दिन राजा बलि पाताल से वहाँ आते हैं। (कुछ लोगों के मत से बलिराज दिवस कार्तिक शुक्ल प्रतिपदा को मनाया जाता है। इस दिन इन्द्र विष्णु के लिए राजा बलि से छीनकर लक्ष्मी को लाये थे)॥२५॥

राजा बलि के समक्ष जो व्यक्ति अम्बिका की पूजा करता है, उसके सम्पूर्ण मनोरथों को महेशानी देवी पूर्ण करती हैं॥२६॥

प्रभूत धन प्रदान करने वाले दुर्गेश्वर महादेव लिङ्ग रूप में वहाँ विराजमान रहते हैं। उनके निकट विशेष श्वेतता रहती है और वहाँ दीपेश्वरी नाम की भगवती विराजमान रहती हैं॥२७॥

दैवयोग से यदि कोई मनुष्य उस शिवानी देवी का दर्शन कर लेता है, तो योगियों के लिये भी दुर्लभ परम सिद्धि को प्राप्त कर लेता है॥२८॥

---

१. गीतोक्ताभिश्चेति ख.ग.।

तत्र दक्षिणादिग्भागे शिवो रामेश्वरो मतः।
तस्य दर्शनमात्रेण सेतुबन्धादनन्तकम्॥२९॥
फलं प्राप्नोति मनुजः सत्यं हि शिवभाषितम्।
तत्र प्रवालिका नाम्नी देवी दैत्यवधोद्यता॥३०॥
यस्या वै पूजनान्मर्त्यो देवीलोके वसेच्चिरम्।
तत्रापि जलदेवीति नाम्ना ब्रह्मर्षिसेविता॥३१॥
जलमध्ये स्थिता नित्यं नवरात्रे प्रदृश्यते।
वीणाकर्णो मुनिस्तत्र तपस्तेपे पुरा यतः॥३२॥
जले ददौ दर्शनं यज्जलदेवीति सा स्मृता।
सर्वसिद्धिप्रदा नित्यं साधकानन्ददायिनी॥३३॥

## भाग्यतीर्थस्य स्थितिः

ततो वै पश्चिमे भागे भाग्यतीर्थमिति स्मृतम्।
भाग्यहीनोऽपि यत्र स्याद् भाग्यवान्नात्र संशयः॥३४॥

---

उसके दक्षिण दिशा में वहीं पर राम के द्वारा पूजित शिव विद्यमान हैं। उनके दर्शन मात्र से मनुष्य सेतुबन्ध रामेश्वर की अपेक्षा अनन्तफल प्राप्त करता है। शिव का यह कथन सत्य है। दैत्यों का वध करने के लिए उद्यत प्रवालिका नाम की देवी वहाँ उपस्थित रहती हैं।।२९-३०।।

जिनका पूजन करने से मनुष्य चिरकाल तक देवलोक में निवास करता है। वहीं पर जलदेवी नाम वाली देवी हैं. जो नित्य ब्रह्मर्षियों से सेवित हैं।।३१।।

वे देवी नित्य जल के मध्य में स्थित रहती हैं। उनका दर्शन केवल नवरात्र में होता है। प्राचीनकाल में वीणाकर्ण नामक मुनि ने वहाँ तप का आचरण किया था।।३२।।

क्योंकि देवी ने उन्हें जल में दर्शन दिया था, इसलिए उनका नाम जलदेवी प्रसिद्ध हो गया। वे देवी सम्पूर्ण सिद्धियों को प्रदान करने वाली एवं साधकों को आनन्द देने वाली हैं।।३३।।

## भाग्यतीर्थ की स्थिति

वहाँ से पश्चिमभाग में भाग्यतीर्थ नाम का एक क्षेत्र है। भाग्यहीन मनुष्य भी उस तीर्थ में भाग्यशाली हो जाता है, उसमें सन्देह नहीं है।।३४।।

